# रत्नावली

नाटिका ।

श्रीहर्षदेवविरचिता ।

पण्डितकुलपतिना

वि, ए, उपाधिधारिणा

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया व्याख्यया समलङ्कृता ।

तदात्मजाभ्यां पण्डित श्रीआशुबोधविद्याभूषण

पण्डित श्रीनित्यबोधविद्यारत्नाभ्यां

संस्कृता प्रकाशिता च ।

चतुर्थसंस्करणम् ।

कलिकाताराजधान्याम् ।

घोषयन्त्रे मुद्रिता ।

ई १९१० ।

# रत्नावली

## नाटिका।

### प्रथमोऽङ्कः।

—००%०%००—

पादाग्रस्थितया मुहुः स्तनभरेणानीतया नम्रतां
शम्भोः सस्पृहलोचनत्रयपथं यान्त्या तदाराधने।
ह्रीमत्या शिरसीहितः सपुलकस्वेदोद्गमोत्कम्पया
विश्लिष्यन् कुसुमाञ्जलिर्गिरिजया क्षिप्तोऽन्तरे पातु वः॥ (१)

---

(१) इयं कविकुलवल्लभस्य श्रीहर्षदेवस्य कृतिः अष्टादशविधोपरूपकेषु अन्तर्गता नाटिका। अधुना रङ्गविघ्नोपशान्तये नान्दीकर्त्तव्यतां विधित्समानः ग्रन्थादौ मङ्गलाचरणं प्रस्तौति—पादाग्रेति। पादाग्रयोः स्थितया, पादाग्रभागम् अवलम्बमानया स्तनभरेण स्तनगुरुत्वेन मुहुर्नम्रताम् आनीतया प्रापितया, तदाराधने शिवसेवायां शम्भोः पत्युः सस्पृहाणां दिदृक्षूणां लोचनत्रयाणां पन्थानमिति गोचरं यान्त्या प्राप्नुवन्त्या, अत एव ह्रीमत्या लज्जितया, तथा पुलकस्य स्वेदोद्गमस्य उत्कम्पस्य तैः सह वर्त्तमानया, एतान्यपि सात्त्विकलक्षणानि बोद्धव्यानि। गिरिजया पार्वत्या शिरसि पत्युरित्यर्थः। ईहितः सम्पादितः दत्त इत्यर्थः, विश्लिष्यन् दानानन्तरं मध्यात् भ्रंशन् कुसुमाञ्जलिः अन्तरे मध्ये क्षिप्तः सन् वो युष्मान् पातु रक्षतु। शार्दूलविक्रीडितम् वृत्तम्। नाटिकालक्षणन्तु विश्वनाथेनोक्तम्—

"नाटिका कॢप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका।
प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः॥
स्यादन्तःपुरसम्बद्धा सङ्गीतव्यापृताथवा।
नवानुरागा कन्यात्र नायिका नृपवंशजा॥
सम्प्रवर्त्तेत नेताऽस्यां देव्यास्त्रासेन शङ्कितः।
देवी पुनर्भवेत् ज्येष्ठा प्रगल्भा नृपवंशजा॥

अपिच

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्त्तमाना ह्रिया,
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी, नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा, शिवायास्तु वः ॥ (२)

अपिच

संग्रामे मकरध्वजेन मथनं त्वत्तो मदर्थे पुरा,
लब्ध्वा त्वं बहुमार्गगां मम पुरो निर्लज्ज ! वोढुस्तव ।
तामेवानुनयस्व भावकुटिलां हे कृष्णकण्ठ ! ग्रहं
मुञ्चेत्याह रुषा यमद्रितनया, लक्ष्मीश, पायात् स वः ॥ (३)

---

पदे पदे मानवती तदयः सङ्गमो द्वयोः ।
शान्तिः स्यात् कौशिकी स्वल्पविमर्षाः सन्धयः पुनः” इति ।

(२) औत्सुक्येनेति । औत्सुक्येन दर्शनाद्युत्कण्ठया कृतत्वरा सत्वरं चेष्टमाना, सहभुवा सहजया ह्रिया लज्जया व्यावर्त्तमाना पश्चात् प्रतिनिवर्त्तमाना, पुनः पश्चात् बन्धूनां स्वजनानां वधूजनस्य विस्रब्धसखीजनस्येत्यर्थः । तैस्तैः पत्युः सन्निधिगमनानुकूल्यप्रयोजकैरित्यर्थः वाक्यैः आभिमुख्यं सामीप्यं नीता प्रापिता, अग्रे सम्मुखे वरं पतिं दृष्ट्वा आत्तसाध्वसरसा विभीषिकारसं व्यञ्जयन्ती इत्यर्थः । नवसङ्गमत्वादिति भावः । तेन नवे सङ्गमे इति कविनैव प्रतिपादितम् । संरोहत्पुलका उद्गतरोमाञ्चा गौरी हसता हरेण श्लिष्टा आलिङ्गिता सती वो युष्माकं शिवाय मङ्गलाय अस्तु भवतु । शार्दूलविक्रीडितम् वृत्तम् ।

(३) संग्राममिति । पुरा पूर्वस्मिन् काले मदर्थे मम कारणात् मकरध्वजेन कामेन, मीनध्वजेन समुद्रेण च त्वत्तः त्वत्सकाशात् मथनं विनाशं विलोडनञ्च संप्राप्तम् । हे निर्लज्ज ! लज्जाविहीन ! मम पुरोऽग्रे बहुमार्गगां विपथगां मन्दाकिनीम्, अन्यच्च बहुपुरुषसेविनीं वेश्यां कुब्जामित्यर्थः । वोढुः शिरसि धारयितुः अन्यच्च उपपतित्वेन ग्रहीतुः तवाकार्य्यमिदम् मदनभञ्जनकारकरूपम् अन्यच्च वेश्यायकस्वरूपं तुच्छमुभयमेव उचितमित्यर्थः । हे कृष्णकण्ठ ! नीलकण्ठ ! शिव ! अन्यच्च कृष्णेति

अपिच

क्रोधेद्धैर्दृष्टिपातैस्त्रिभिरुपशमिता वह्नयोऽमी त्रयोऽपि
त्रासार्त्ता ऋत्विजोऽधश्चपलगणहृतोष्णीषपट्टाः पतन्ति ।
दक्षः स्तौत्यस्य पत्नी विलपति कृपणं विद्रुतं चापि देवैः
शंसन्नित्यात्तहासो मखमथनविधौ पातु देव्यै शिवो वः ॥ (४)

किञ्च

जितमुडुपतिना नमः सुरेभ्यो द्विजवृषभा निरुपद्रवा भवन्तु ।
भवतु च पृथिवी समृद्धसस्या प्रतपतु चन्द्रवपुर्नरेन्द्रचन्द्रः ॥ (५)

---

च्छेदः । हे कृष्ण ! भावेन स्वभावेन कुटिलां वक्रगामिनीं नदीनां वक्रगतित्वादिति भावः । वक्रस्वभावत्वमपि व्यज्यते । अन्यत्र भावकुटिलां कुटिलप्रकृतिं तामेव मद्-लिखितं मन्दाकिनीमिव अन्यत्र कुब्जामिव अनुनयस्व प्रसादय, तवैव निर्मलमुखस्य स्मित-त्वादिति भावः । अहम् आयहम् अन्यत्र कष्टकरं मुञ्च अभयवैव परित्यज, इति यथा कोपेन अन्तिनया पार्वती अप्तीव यं महादेवं कृपाय आह उवाच, आहेति वर्तमानसामीप्ये भूतार्थे लट् । स शिवः कृपाय वः युष्मान् पायात् रक्षतु । शार्दूल-विक्रीडितम् वृत्तम् । अत्र स्वं पालकारी व्यक्त एव ।

(४) क्रोधेद्धैरिति । क्रोधेन इद्धैः प्रदीप्तैस्त्रिभिर्दृष्टिपातैर्दृष्टिक्षेपैस्त्रयः अमी वेदोक्ता इत्यर्थः वह्नयो ज्वलना उपशमिता अपि चपलैरुत्पीडकैर्गणैः प्रमथैः हृतं बलादपहृतं उष्णीषपट्टं येषां ते ऋत्विजो याज्ञिकाः त्रासार्त्ता भयविह्वलाः अन्तोऽधः प्रदेशे पतन्ति । दक्षः सतीपिता स्तौति महादेवम् इत्यर्थः । अस्य दक्षस्य पत्नी कृपणं दीनं यथा भवति तथा विलपति परिदेवते, देवैश्चापि विद्रुतं पलायितं द्रुधातोर्भावे क्तः । मखमथनविधौ दक्षयज्ञध्वंसानुष्ठाने देव्यै पत्न्यै इति शंसन् कथयन् क्रियार्थोपा-दानाच्चतुर्थी । आत्तो गृहीतो हासो यस्य स शिवः वः पातु । स्रग्धरावृत्तम् ।

(५) जितमिति । उडुपतिना चन्द्रेण जितं चन्द्रस्य जयो जात इत्यर्थः । जितमिति भावे निष्ठा । सुरेभ्यो नमः तान् नमस्कुर्महे इत्यर्थः । द्विजवृषभा द्विजश्रेष्ठा निरुपद्रवा उपद्रवरहिता भवन्तु । पृथिवी च समृद्धसस्या शस्यफलमूलसम्पत्तिसम्पन्ना भवतु । चन्द्रवपुः आह्लादकतया तत्तुल्यकान्तिः नरेन्द्रचन्द्रः राजश्रेष्ठः श्रीहर्षदेवः प्रतपतु प्रतापशाली भवतु इत्यर्थः । पुष्पिताग्रावृत्तम् ।

नान्द्यन्ते सूत्रधारः। (क)

सूत्र। अलमतिप्रसङ्गेन। अद्य अहं वसन्तोत्सवे सबहुमानम् आहूय, नानादिग्देशागतेन राज्ञः श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेन उक्तः। यथा अस्मत्स्वामिना श्रीहर्षदेवेन अपूर्ववस्तुरचनालङ्कृता रत्नावली नाम नाटिका कृता इति अस्माभिः श्रोत्रपरम्परया श्रुता, न तु प्रयोगतो दृष्टा, तत्तस्यैव राज्ञः सकलजनहृदयाह्लादिनो बहुमानात् अस्मासु च अनुग्रहबुद्ध्या यथावत् प्रयोगेण त्वया नाटयितव्या इति। [ परिक्रम्यावलोक्य च। ] तद्यावदिदानीं नेपथ्यरचनां कृत्वा, यथाभिलषितं सम्पादयामि। [ परिषदम् अवलोक्य। ] अये! आवर्जितानि इव सकलसामाजिकानां मनांसि इति मे निश्चयः। यतः

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम्।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं, किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः॥ (६)

---

(क) नान्द्यन्ते सूत्रधारः। सूत्रं नाटककथाप्रस्तावं धारयति सूचयति यः स इत्यर्थः। नान्दीलक्षणं, यदुक्तं विश्वनाथेन,—"आशीर्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते। देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता॥ मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी। पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुतेति। अत्र द्वादशभिरष्टाभिर्वा पदैरुतेति नियमात् विंशतिपदैः कथन्तरां नान्दीलक्षणं सङ्गच्छेत इत्याशङ्का प्रथमोक्तस्य श्लोकद्वयस्य परस्परं यथाक्रमसन्निवेशितशब्दार्थान्वयसाहचर्य्येण चतुष्पदत्वमिति सङ्क्षेपः। अनन्तरं प्रयुक्तस्य श्लोकद्वयस्य च अष्टपदत्वात् मिलित्वा द्वादशपदत्वमन्यथा प्रक्रमभङ्गो यन्या-सङ्गतिशोपपद्येयातामिति तात्पर्य्यं द्रष्टव्यम्। सार्द्धशतविक्रमीयसंवत्सरे श्रीहर्षः काश्मीरदेशस्य भूपतिरासीत्।

(६) श्रीहर्ष इति। श्रीहर्षो महाराजः निपुणः प्रवीणः दक्ष इति यावत्

तत् यावदहं गृहं गत्वा गृहिणीमाहूय, सङ्गीतकमनुतिष्ठामि । [ परिक्रम्य नेपथ्याभिमुखमवलोक्य च । ] इदमस्मदीयं गृहं यावत् प्रविशामि । [ प्रविश्य उच्चैः । ] आर्य्ये ! इतस्तावत् ।

[ प्रविश्य नटी । ] अज्जउत्त ! इअम्हि, आणवेदु अज्जो, को णिओओ अणुचिट्ठीअदुत्ति (१)

सूत्र । आर्य्ये ! रत्नावलीदर्शनोत्सुकोऽयं राजलोकः, तत् गृह्यतां नेपथ्यम् ।

नटी । [ निश्वस्य सावेगम् । ] अज्ज ! णिच्चिन्तो दाणिं सि तुमं, ता कीस ण णच्चसि, मह उण मन्दभाआए एक्का जेव्व दुहिदा, सावि तुए कहिंवि देसन्तरे दिण्णा, कहं एव्वं दूरदेसट्ठिदेण भत्तुणा सह से पाणिग्गहणं भविस्सदित्ति, इमाए चिन्ताए अप्पाणि मे ण पड़िभादि, ता किं उण णच्चिदव्वं (२) ।

सूत्र । आर्य्ये ! दूरस्थेन इति अलमुद्वेगेन । पश्य—

---

(१) आर्य्यपुत्र ! इयमस्मि आज्ञापयतु, आर्य्य ! को नियोगः अनुष्ठीयतामिति ।

(२) आर्य्यपुत्र ! निश्चिन्त इदानीमसि त्वं, तस्मात्कथं न नृत्यसि ? मम पुनर्मन्दभाग्याया एकैव दुहिता, सापि त्वया देशान्तरे दत्ता, कथमेवं दूरदेशस्थितेन भर्त्रा सह तस्याः पाणिग्रहणं भविष्यतीति, अनया चिन्तया आत्मापि मे न प्रतिभाति, तत् किं पुनर्नर्त्तितव्यम् ।

---

कविः कविताप्रणेता । एषा परिषत् सभापि गुणग्राहिणी गुणज्ञा । वत्सराजस्य उदयनस्य चरितं कथा लोके जगति हारि मनोहरञ्च, वयञ्च नटादयो नाट्ये नटाभिनेतव्याभिनयकर्मणि दक्षाः कुशला इत्यर्थः । इह विषये एकैकमपि न पुनः सर्वमित्यर्थः वस्तु वाञ्छितस्य सभासन्तोषरूपस्य फलस्य प्राप्तेः पदं स्थानं महाभाग्यस्य उपचयात् वृद्धिवशात् अयं सर्वः सर्वप्रकारो गुणानां गणः समूहः

द्वीपादन्यस्मादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ (७)

[ नेपथ्ये । ] साधु भरतपुत्र ! साधु, एवमेतत् कः सन्देहः ।
[ द्वीपादित्यादि पुनः पठति । ]

सूत्र । [ आकर्ण्य नेपथ्याभिमुखमवलोक्य । ] आर्य्ये ! किमतःपरं विलम्बसे, ननु अयं मम यवीयान् भ्राता, गृहीतयौगन्धरायणभूमिकः प्राप्त एव तदेहि नेपथ्यग्रहणाय सज्जीभवावः । [ इति निष्क्रान्तौ । ]

## प्रस्तावना (क)

ततः प्रविशति यौगन्धरायणः ।

यौग । एवमेतत् कः सन्देहः । [ द्वीपादिति पुनः पठित्वा । ] अन्यथा क्व सिद्धादेशजनितप्रत्ययप्रार्थितायाः सिंहलेश्वरदुहितुः समुद्रे यानभङ्गनिमग्नायाः फलकासादनम् ? क्व च कौशाम्बीयेन वणिजा सिंहलेभ्यः प्रत्यागच्छता तदवस्थायाः सम्भावनं रत्नमालाचिह्नायाः प्रत्यभि-

---

समुदित उत्पन्नः, किं पुनरवस्थमेव अत्र ममैव भाग्यं कारणमिति यावत् । शार्दूलविक्रीडितम् ।

(७) द्वीपादिति । अन्यस्मात् प्रसिद्धसप्तसंख्यकद्वीपभिन्नात् द्वीपात् सिंहलद्वीपादित्यर्थः । जलनिधेः समुद्रस्य मध्यादपि दिशः अन्तात् दिगन्तादपि, अत्र जातिवाचकदिक्शब्दस्यैक्यात् एकवचनान्तत्वमुक्तम् । उपाधिभेदादेकापि प्राच्यादिव्यपदेशभागिति न्यायमतमवलम्ब्य तथात्वम् उक्तमित्यभिप्रायो बोद्धव्यः । आनीय आनयनं कृत्वा झटिति विलम्बमकृत्वैव अभिमुखीभूतः सम्मुखीनो विधिर्दैवं स्रष्टा च अभिमतं वस्तु प्रियजनं वा घटयति सम्पादयतीत्यर्थः । आर्य्यावृत्तम् ।

(क) प्रस्तावनालक्षणन्तु उक्तं दर्पणकृता,—"नटी विदूषको वापि पारिपार्श्विक

ग्रामात् इहानयनञ्च। [सहर्षम्।] सर्वथा स्पृशन्ति नः स्वामिनमभ्युदयाः। [विचिन्त्य।] मयापि च एनां देवी-हस्ते सगौरवं निक्षिपता युक्तमेवानुष्ठितं, श्रुतञ्च मया, बाभ्रव्योऽपि कञ्चुकी सिंहलेश्वरामात्येन वसुभूतिना सह कथं कथमपि समुद्रादुत्तीर्य्य, कोशलोच्छित्तये गतवता रुमण्वता मिलित इति। तदेवं निष्पन्नप्रायमपि प्रभुप्रयोजनं न मे धृतिमावहति इति कष्टोऽयं खलु भृत्यभावः। यतः

प्रारम्भेऽस्मिन् स्वामिनो वृद्धिहेतौ
दैवेनेत्थं दत्तहस्तावलम्बे।
सिद्धे भ्रान्तिर्नास्ति सत्यं, तथापि
स्वेच्छाचारी भीत एवास्मि भर्त्तुः॥ (८)

[नेपथ्ये कलकलः। आकर्ण्य।] अये मधुरमभिहन्यमानमृदुमृदङ्गानुगतसङ्गीतमधुरः पुरः पौराणाम् उच्चरति चर्चरीध्वनिः, तथा तर्कयामि यदेनं मदनमहमहीयांसं पुरजनप्रमोदम् अवलोकयितुं प्रासादाभिमुखं प्रस्थितो देव इति। [ऊर्द्ध्वमवलोक्य।] अये, कथमधिरूढ एव देवः प्रासादम्। य एषः,—

---

एव वा। सूत्रधारेण सहिताः संलापं यत्र कुर्वते। चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः। आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा, इति। अत्र कथोद्घातनामा प्रस्तावनाभेदः।

(८) प्रारम्भ इति। स्वामिनो वत्सराजस्य वृद्धिहेतौ अभ्युदयसूचके अस्मिन् प्रारम्भे रत्नावलीलाभरूपे इत्यर्थः। इत्थम् अनेन प्रकारेण दैवेन दत्तहस्तावलम्बे विहितसाहाय्ये सति, सिद्धे विषये भ्रान्तिः सन्देहः ममेत्यर्थात् सत्यं, नास्तीत्यनुमिनोमीत्युत्प्रेक्षालङ्कारः। तथापि अनुगुणकार्य्यसाधनसम्पन्नत्वेऽपि स्वेच्छाचारी अहं भर्त्तुः स्वामिनो भीत एव अस्मीति, अत्र भीत्यर्थानां भयहेतौ पञ्चमी। मालिनीवृत्तम्।

विश्रान्तविग्रहकथो रतिमान् जनस्य
चित्ते वसन्, प्रियवसन्तक एव साक्षात्।
पर्य्युत्सुको निजमहोत्सवदर्शनाय
वत्सेश्वरः कुसुमचाप इवाभ्युपैति॥ (९)

तद्यावदुगृहं गत्वा, कार्य्यशेषं चिन्तयामि। [इति निष्क्रान्तः।] विष्कम्भकः। *

ततः प्रविशत्यासनस्थो गृहीतवसन्तोत्सववेशो राजा विदूषकश्च।

राजा। [सहर्षमवलोक्य।] सखे वसन्तक!

विदू। आणबेदु भवं। (१)

राजा।

राज्यं निर्जितशत्रु, योग्यसचिवे न्यस्तः समस्तो भरः,
सम्यक्पालनलालिताः प्रशमिताशेषोपसर्गाः प्रजाः।
प्रद्योतस्य सुता, वसन्तसमयस्त्वञ्चेति नाम्ना धृतिम्
कामः काममुपैत्वयं मम पुनर्मन्ये महानुत्सवः॥ (१०)

(१) आज्ञापयतु भवान्।

(९) विश्रान्तेति। विश्रान्ता विग्रहस्य युद्धस्य शरीरस्य च कथा यस्य, एकत्र शत्रुराहित्यवशात्, अन्यत्र अनङ्गत्वात् इत्यर्थः। विग्रहो युद्धवपुषोरिति विश्वः। रतिमान् अनुरागी, प्रणयवान् इत्यर्थः। अन्यत्र रतिसहितः, जनस्य जातावेकवचनं जनानामित्यर्थः। चित्ते वसन् तिष्ठन् उभयत्रैव समानः, कामस्य तु मनसिजत्वादिति। प्रियो वसन्तकः स्वसखा यस्य सः, अन्यत्र प्रियो वसन्तो वसन्तकालो यस्य बहुव्रीहौ शैषिकः कप्। निजमहोत्सवस्य दर्शनाय पर्य्युत्सुकः उत्कण्ठितः वत्सेश्वरो वत्सराजः साक्षात् तुल्यः कुसुमचापः काम इव इत्युत्प्रेक्षा, अभ्युपैति समागच्छति। वसन्ततिलकम् वृत्तम्। अत्र श्लेषसङ्कीर्णयमुत्प्रेक्षा॥

* वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥

(१०) राज्यमिति। राज्यं राष्ट्रं निर्जितशत्रु समुन्मूलितशत्रुकण्टकं समस्तो-

विदू [सहर्षम्।] भो वअस्स! एव्वं णेदं। अहं उण जाणामि ण भवदो, ण कामदेवस्स, मम ज्जेव्व एक्कस्स बह्मणवडुअस्स अअं मअणमहूसओ, जस्स किदे पिअवअस्सेण एव्वं मन्तीअदि। [विलोक्य।] ता किं इमिणा, पेक्ख दाव इमस्स महुमत्तकामिणीजणसअंगाहगहिदणच्चणाअरजणजणिदकोदूहलस्स, समन्तदो संवुत्तमद्दलोद्दामचच्चरीसद्दमुहररत्थामुहसोहिणो, पइण्णपडवासपुञ्जपिञ्जरिदद्दहदिसामुहस्स, सस्सिरीअदं मअणमहूसवस्स (१)

राजा। [सहर्षं समन्तादवलोक्य।] अहो! परां कोटिमधिरोहति प्रमोदः पुरः पौराणाम्। तथाहि—

---

(१) भो वयस्य! एवं न्विदम्। अहं पुनर्जानामि, न भवतः, न कामदेवस्य, ममैव एकस्य ब्राह्मणवटुकस्य अयं मदनमहोत्सवो, यस्य कृते प्रियवयस्येनैवं मन्त्र्यते। तत् किं पुनरनेन, प्रेक्षस्व तावदस्य मधुमत्तकामिनीजनस्वयंग्राहगृहीतनृत्यनागरजनजनितकौतूहलस्य, समन्ततः संवृत्तमर्दलोद्दामचर्चरीशब्दमुखररथ्यामुखशोभिनः, प्रकीर्णपटवासपुञ्जपिञ्जरितदशदिङ्मुखस्य, सश्रीकतां मदनमहोत्सवस्य।

---

ऽखिलः भरः सन्धिविग्रहादिसमालोचनाकार्य्यशक्तिरित्यर्थः। योग्ये उपयुक्ते सचिवे अमात्ये न्यस्तः समर्पितः, सत्यं त्वं निश्चिन्तोऽसि तथापि प्रजापालनं के विधास्यन्तीत्याह, प्रजाः प्रकृतयः सम्यक् पालनेन रक्षणादिना लालिता राजभक्तिपात्रीकृता इत्यर्थः। तथा प्रशमिताः सम्यक् प्रशमं प्रापिता अशेषा अखिला उपसर्गा उपद्रवा याभ्यां ताः तथोक्ता निर्विपद इत्यर्थः। प्रद्योतस्य तन्नामकस्य सुता, मम प्रेयसी, वसन्तसमयो वसन्तकालः, त्वं रहस्यबन्धुः त्वञ्च, एतत् सर्वं मम सुखकरत्वेन विद्यते। सुखसाधनानि यानि राज्ञां अपेक्षितानि तानि प्रभूतानि मम सन्तीति भावः। इति धृतिरयं कामः कन्दर्पो नाम्ना नामोच्चारणमात्रेणैव कामं पर्य्याप्तं यथा भवति तथा धृतिं [illegible] सन्तोषम् उपैतु प्राप्नोतु मम पुनर्मम किन्तु महान् उत्सवः मन्ये उत्प्रेक्षे इत्यर्थः। शार्दूलविक्रीडितम्।

कौर्यैः पिष्टातकौघैः कृतदिवसमुखैः कुङ्कुमक्षोदगौरैः
हैमालङ्कारभाभिर्भरनमितशिखैः शेखरैः कैङ्किरातैः ।
एषा वेशाभिलक्ष्यस्वविभवविजिताशेषवित्तेशकोषा,
कौशाम्बी शातकुम्भद्रवखचितजनेवैकपीता विभाति ॥ (११)
अपि च

धारायन्त्रविमुक्तसन्ततपयःपूरप्लुते सर्वतः
सद्यः सान्द्रविमर्दकर्दमकृतक्रीड़े क्षणं प्राङ्गणे ।
उद्दामप्रमदाकपोलनिपतत्सिन्दूररागारुणैः
सैन्दूरीक्रियते जनेन चरणन्यासैः पुरः कुट्टिमम् ॥ (१२)

---

(११) कौर्यैरिति । कौर्यैर्विक्षिप्तैः कुङ्कुमानां क्षोदैश्चूर्णैरिव गौरैर्गौरवर्णैः अत एव कृतं दिवसमुखम् अहर्मुखं यैस्तैः पिष्टातकानां पटवासमार्थं गन्धद्रव्यादीनां ओघैः समूहैः हैमालङ्काराणां सौवर्णाभरणादीनां भाभिर्मयूखैः तथा भरनमितशिखैर्भारनम्रैः कैङ्किरातैः किङ्किरातसम्बन्धिभिः, पुष्पजनितरक्तिमवर्णैरित्यर्थः शेखरैः शिखाभिः करणैः अथवा हैमालङ्कारेत्यादि शेखरविशेषणं योजनीयम् । वेशैर्भूषाभिः अभिलक्ष्येण स्पष्टं प्रतीयमानेन स्वविभवेन स्वीयसम्पत्त्या विजितोऽशेषः समस्तो वित्तेशकोषो धनेशधनागारो यया अलकाया अपि असाधारणधनशालिनं जनता । एषा दृश्यमानेत्यर्थः कौशाम्बी स्वनाम्ना प्रसिद्धा नगरी शातकुम्भानां कनकानां द्रवैः रसैः खचिता विरचिता जना लोका यत्र सा अत एव एकपीता एकं पीतं पीतवर्णो यस्याः सा इव विभाति द्योतते इत्युपमासङ्कीर्णोत्प्रेक्षा । स्रग्धरा-वृत्तम् ।

(१२) धारेति । अनेन नागरिकजनेन कर्त्रा सर्वतः चतुर्दिक्षु धारायन्त्रेभ्यः कृत्रिमजलयन्त्रेभ्यो विमुक्तानां सन्ततानां प्रवाहरूपेण गच्छतां पयसां पूरैः प्रवाहैः प्लुते नितरां जलार्द्रीकृते, अत एव क्षणं व्याप्य सद्यस्तत्क्षणात् सान्द्रो घनो विमर्दो यत्र च तस्मिन् घनीभूते कर्दमे कृता क्रीडा यस्मिन् तस्मिन् प्राङ्गणे चत्वरे अङ्गणे नितरां क्रीड़नोनामित्यर्थः प्रमदानां नारीणां कपोलेभ्यो गण्डेभ्यः निपतद्भिः पातुकैः सिन्दूररागेः करणैः अरुणैः अरुणवर्णैः चरणन्यासैः पादक्षेपैः करणैः

विदू। [विलोक्य।] एदंपि दाव सुविअद्धजणापूरिदसिंगकजलप्पहारमुक्कसिक्कारमणोहरं बारविलासिणीजणविलसिदं आलोएदु पिअवअस्सो (१)

राजा। [विलोक्य।] वयस्य! सम्यक् दृष्टं त्वया। कुतः

अस्मिन् प्रकीर्णपटवाससकृतान्धकारे,
दृष्टो मनाक् मणिविभूषणरश्मिजालैः।
पातालमुद्यतफणाकृतिशृङ्गकोऽयम्
मामद्य संस्मरयतीव भुजङ्गलोकः॥ (१३)

विदू [विलोक्य।] भो वअस्स! पेक्ख, पेक्ख, एसा क्खु मअणिया मअणरसविसअदत्ताभिणआ णच्चन्ती, चूदलदिआए सह इदोजेव्व आअच्छदित्ति ता पेक्खदु भवम् (२)।

ततः प्रविशतो मदनलीलां नाटयन्त्यौ द्विपदीखण्डं गायन्त्यौ चेट्यौ।

---

(१) इदमपि तावत् सुविदग्धजनापूरितशृङ्गकजलप्रहारमुक्तशीत्कारमनोहरं बारविलासिनीजनविलसितम् आलोकयतु प्रियवयस्यः।

(२) भो वयस्य! प्रेक्षस्व, प्रेक्षस्व, एषा खलु मदनिका मदनरसविषयदत्ताभिनया नृत्यन्ती चूतलतिकया सह इत एवागच्छति तत्पश्यतु भवान्। मअणसरिसं वसन्ताभिणअं णच्चन्तीति पाठान्तरम्।

---

पुरोऽयती दृश्यमानं कुट्टिमं बद्धभूमिः, "कुट्टिमोऽस्त्री निबद्धा भूः" इति विश्वः। सैन्दूरीक्रियते सिन्दूरमयमिव विधीयते इत्युत्प्रेक्षा। शार्दूलविक्रीडितम् वृत्तम्।

(१३) अस्मिन्निति। प्रकीर्णैः पटवासैर्गन्धद्रव्यैः कृतान्धकारे विरचिततिमिरे अस्मिन् वसन्तोत्सवे इत्यर्थः मणिविभूषणानां हीरकमौक्तिकप्रभृतिरत्नाभरणानां रश्मिजालैः किरणपटलैः मनाक् अल्पं दृष्टोऽयं उद्यतानि फणीव आकृतिर्येषां तानि शृङ्गाणि यस्य स भुजङ्गलोको जारजनः अद्य अस्मिन् क्षणे मां पातालं संस्मरयतीव इत्युत्प्रेक्षा, अत्र शृङ्गाणां फणाकृतित्वेन उपमोत्प्रेक्षा, सा चोपमया संकीर्यते इति। वसन्ततिलकम् वृत्तम्।

मदनिका गायति।

कुसुमाउहपिअदूअओ, मउलाइदबहुचूअओ।
सिढिलिअमाणग्गहणओ वाअइ दाहिणपवणओ॥१४॥
विरहिअवउलामोअओ, कंखिअपिअजणमेलयो।
पडिवालणअसमत्थओ भमइ जुबईसत्यओ (१५)॥

इह पढमं महुमासो जण हिअआइं कुणइ बाउलाइं।
पच्छा विज्झइ कामो लडपसरेहिं बाणेहिं (१६)॥

राजा। [निर्वर्ण्य।] अहो मधुरोऽयमासां निर्भरः क्रीड़ारसः। तथाहि

स्रस्तः स्रग्दामशोभां त्यजति विरचितामाकुलः केशपाशः
क्षीवाया नूपुरौ च द्विगुणतरमिमौ क्रन्दतः पादलग्नौ।
व्यस्तः कम्पानुबन्धादनवरतमुरो हन्ति हारोऽयमस्याः
क्रीड़न्त्याः पीड़येव स्तनभरविनमन्मध्यभङ्गानपेक्षम्॥ (१७)

---

(१४) कुसुमायुधप्रियदूतः, मुकुलायितबहुचूतकः,
शिथिलितमानग्रहणो वाति दक्षिणपवनकः।

(१५) विवाहितवकुलामोदः काङ्क्षितप्रियजनमेलकः
प्रतिपालनासमर्थको भ्रमति युवतिसार्थः॥

(१६) इह प्रथमं मधुमासो जनहृदयानि करोति व्याकुलानि।
पश्चात् विध्यति कामो लब्धप्रसरैर्बाणैः।

---

(१७) स्रस्त इति। आकुलः क्रीड़ावशात् चपलः केशपाशः कबरी, स्रस्तः स्खलितः सन् विरचिताम् आदौ सम्पादितां स्रक्दाम्नः कुसुमस्रजः शोभां त्यजति, क्षीवाया वसन्तोत्सवे मधुरसपानात् प्रमत्ताया पादलग्नौ इमौ नूपुरौ चरणालङ्कारौ द्विगुणतरमधिकतरं क्रन्दतः शब्दायमानाविव स्थिताविल्युत्प्रेक्षा। तथा क्रीड़न्त्याः नृत्यन्त्या अस्या हारो व्यस्तः क्षिप्तः सन् कम्पानुबन्धात् क्षेपजन्यकम्पवशात् पीड़येव पीड़ां दातुमिव स्तनभरेण विनमतो मध्यस्य मध्यदेशस्य भङ्गाय न अपेक्षते इत्यनपेक्षं भ्रष्टतां वहदित्यर्थः उरो वक्षःस्थलं कर्म अनवरतं अविरतं यथा स्यात् तथा हन्ति ताड़यति। स्रग्धरावृत्तम्।

विदू। [सहासम्।] भो वअस्स! अहम्मि एदाणं बहुपरिअराणं मज्झे णच्चन्तो गायन्तो मअणमहूसवं संमाणइस्सं (१)।

राजा। [सस्मितम्।] एवं क्रियताम्।

विदू। जं भवं आणवेदित्ति। [उत्थाय तयोर्मध्ये नृत्यति]। भोदि मअणिए! भोदि चूदलदिए! इदं चच्चरिअं मम्पि सिक्खावेध (२)।

मद। [विहस्य।] हदास! णहु चच्चरी एसा द्विपदीखण्डं एदं (३)।

विदू। [सहर्षम्] भोदि किं एदिणा खण्डेण मोदआ लड्डुआ वा करीअन्ति (४)।

मद। [विहस्य।] हदास! णहि, णहि, पठीअदि क्खु एदं (५)।

विदू। [सविस्मयम्।] पठीअदि क्खु एदं। [सविषादम्।] जइ पठीअदि, ण भुञ्जीअदि, ता मम एदिणा ण कज्जम्। वरं पिअवअस्सस्स ज्जेव्व सआसं गमिस्सं (६) [तथा करोति। अपसृत्योपविशति।]

---

(१) भो वयस्य! अहमप्येतासां बहुपरिकराणां मध्ये नृत्यन्, गायन्, मदनमहोत्सवं सम्मानयिष्यामि।

(२) यत् भवान् आज्ञापयति। भवति मदनिके! भवति चूतलतिके! इदञ्चर्चरीकं मामपि शिक्षयतम्।

(३) हताश! नहि चर्चरी एषा, द्विपदीखण्डमेतत्।

(४) भवति, एतेन खण्डेन किं मोदका लड्डुका वा क्रियन्ते।

(५) हताश! नहि नहि, पठ्यते खल्वेतत्।

(६) पठ्यते खल्वेतत्। यदि पठ्यते, न भुज्यते, तन्ममैतेन न कार्य्यम्। वरं प्रियवयस्यस्यैव सकाशं गमिष्यामि।

उभे। [ आकर्षतः। ]

विदू। [ आकर्षयति। ]

मद। हदास! एहि, कहिं गच्छसि, इधज्जेव्व कीलह्म (१) [ इति बहुविधं ताड़यति। ]

विदू। [ आकृष्य हस्तं, प्रपलाय्य, राजानमुपसृत्य। ] भो वअस्स! णच्चिदोह्मि (२)।

राजा। वयस्य! क्रीड़ितम्।

विदू। णहि कीलिअ पलाइदोह्मि (३)।

चूतलतिका। हज्जे मअणिए! चिरं क्खु अह्मेहिं कीलिदं, ता एहि, णिवेदेह्म दाव भट्टिणीए सन्देसं महाराअस्स (४)।

मद। चूदलदिए! सुट्ठु तुए सुमरिदं एदं एव्वं करेह्म। [ परिक्रम्योपसृत्य च। ]

उभे। जेदु जेदु भट्टा, राअन्! देवी आणवेदि। [ इत्यर्द्धोक्ते लज्जां नाटयन्त्यौ। ] णहि णहि, विसवेदि (५)।

---

(१) हताश! एहि, कुत्र गच्छसि, इहैव क्रीडामः। "चिट्ठ विणा कीलिअ हदास! कहिं गच्छसि" इति पाठोऽपि दृश्यते। तिष्ठ विना क्रीड़ितं, हताश! कुत्र गच्छसि इति स०।

(२) भो वयस्य। नर्त्तितोऽस्मि।

(३) नहि क्रीड़ित्वा पलायितोऽस्मि।

(४) हज्जे (सखि) मदनिके! चिरं खल्वस्माभिः क्रीड़ितं, तदेहि, निवेदयामस्तावत् भट्टिन्याः सन्देशं महाराजाय।

(५) चूतलतिके! सुष्ठु त्वया स्मृतम् एतदेव कुर्मः। जयति जयति भर्त्ता। राजन्! देवी आज्ञापयति। नहि नहि विज्ञापयति।

राजा। [ सहर्षं विहस्य सादरम्। ] मदनिके! ननु आज्ञापयतीत्येव रमणीयं, विशेषतोऽद्य मदनमहोत्सवे। तत् उच्यतां, किम् आज्ञापयति देवी।

विदू। आः दासीए धीए! किंत्ति देवी आणवेदित्ति (१)।

चेटी। एवं भट्टिणी विण्णवेदि, जहा क्खु अज्ज मए मअरंदुज्जाणं गदुअ, रत्तासोअपाअवटलट्ठिदस्स भअवदो कुसुमाउहस्स पूआ णिव्वत्तिदव्वा, तहिं अज्जउत्तेण सण्णिहिदेण होदव्वं त्ति ( २ )।

राजा। वयस्य! किं वक्तव्यम्, उत्सवात् उत्सवान्तरम् आपतितमिति।

विदू। भो वअस्स! ता उट्ठेहि, तहिं ज्जेव्व गच्छह्म, जेण तहिं गदस्स ममावि बह्मणबालअस्स सोत्थिवाअणं किम्पि भविस्सदित्ति ( ३ )।

राजा। मदनिके! गम्यतां, देव्यै निवेदयितुम्, अयम् अहम् आगत एव मकरन्दोद्यानमिति।

चेटी। जं भट्टा आणवेदित्ति (४)। [ इति निष्क्रान्ते। ]

राजा। वयस्य! एहि अवतरावः।

---

(१) आः दास्याः पुत्रि! किमिति देवी आज्ञापयति।

(२) एवं भट्टिनी विज्ञापयति, तथा खलु अद्य मया मकरन्दोद्याने गत्वा, रक्ताशोकपादपतलस्थितस्य भगवतः कुसुमायुधस्य पूजा निर्वर्त्तयितव्या, तत्र आर्य्यपुत्रेण सन्निहितेन भवितव्यमिति।

(३) भो वयस्य! तदुत्तिष्ठ, तत्रैव गच्छामः, येन तत्र गतस्य ममापि ब्राह्मणबालकस्य स्वस्तिवाचनं किमपि भविष्यतीति।

(४) यद्भर्त्ता आज्ञापयति इति।

[ उभौ प्रासादावतरणं नाटयतः । ]

राजा । वयस्य ! आदेशय मकरन्दोद्यानस्य मार्गम् ।

विदू । एदु भट्टा । [ इति परिक्रामतः अग्रतोऽवलोक्य । ] भो एदं तं मअरंदुज्जाणं, ता एहि पविसम्ह । [ इति प्रविशतः । सविस्मयम् । ] भो महाराअ ! पेक्ख पेक्ख, एदं तं मलअमारुदान्दोलिअमउलन्तसहआरमञ्जरीरेणु-पडलपड़िबद्धपड़विआणं, मत्तमहुअरणिअरमुक्कझङ्कार-मिलिदमहुरकोइलालावसङ्गीदसुहावहं, तुहागमणदंसिआदरं, विअ मअरंदुज्जाणं लक्खीअदि । ता पविसदु भवं (१) ।

राजा । [ समन्तादवलोक्य । ] अहो रम्यता मकरन्दोद्यानस्य, इह हि :—

उद्यद्विद्रुमकान्तिभिः किशलयैस्ताम्रां त्विषं बिभ्रतो
भृङ्गालीविरुतैः कलैरविशदव्याहारलीलाभृतः ।
घूर्णन्तो मलयानिलाहतिचलैः शाखासमूहैर्मुहुः
भ्रान्तिं प्राप्य मधुप्रसङ्गमधुना मत्ता इवामी द्रुमाः ॥ (१८)

---

(१) एतु भर्त्ता । भो एतन्मकरन्दोद्यानं तदागच्छ प्रविशामः । भो महाराज ! प्रेक्षस्व प्रेक्षस्व, एतत् तत् मलयमारुतान्दोलितमकुलायमानसहकारमञ्जरीरेणुपटल-प्रतिबद्धपटवितानम्, मत्तमधुकरनिकरमुक्तझङ्कारमिलितमधुरकोकिलालापसङ्गीत-सुखावहं, त्वदागमनदर्शितादरमिव, मकरन्दोद्यानं लक्ष्यते । तत् प्रविशतु भवान् ।

---

(१८) उद्यदिति । उद्यत्विद्रुमाणां नववैदूर्य्याणां कान्तिरिव कान्तिः येषां इति निदर्शनाभेदः । किशलयैः पल्लवैः करणैः ताम्रां ताम्रवर्णां त्विषं प्रभां बिभ्रतः

अपि च,

मूले गण्डूषसेकासव इव बकुलैर्वाम्यते पुष्पवृष्ट्या,
मध्वाताम्रे तरुण्या मुखशशिनि चिराच्चम्पकान्यद्य भान्ति ।
आकर्ण्याशोकपादाहतिषु च रणतां निर्भरं नूपुराणां
झङ्कारस्यानुगीतैरनुकरणमिवारभ्यते भृङ्गसार्थैः ॥ (१९)

विदू । [ आकर्ण्य । ] भो वअस्स ! ण एदे महुअरा णेउरसद्दं अणुकरीअन्ति, णेउरसद्दो ज्जेव्व एसो देवीए परिअणस्स (१) ।

(१) भो वयस्य ! न एते मधुकरा नूपुरशब्दमनुकुर्वन्ति, नूपुरशब्द एव एष देव्याः परिजनस्य ।

प्रतिपादयन्तः धारयन्त इति शेषः । शीधुसेवनेन जनिताक्षिमाण इति भावः: । कलैः अस्फुटाक्षरैः भृङ्गालीनां भृङ्गश्रेणीनां विरुतैः ध्वनिभिः अविशदव्याहारस्य अस्फुटवचनस्य लीलां सास्यं बिभर्ति इति तद्भृतः तत्तुल्या इव प्रतिभान्ति, मानवाश्च सुरां पीत्वा व्यक्तनादं प्रलपन्ति इति भावः । मलयानिलस्य आहत्या आघातेन चलैः कम्पमानैः शाखासमूहैः शाखाततिभिः मुहुर्वारंवारं घूर्णन्तो घूर्णिताः सन्तः अतापि तथात्वमुत्प्रेक्ष्यते । अमी हश्यमाना द्रुमाः वृक्षाः मधुप्रसङ्गेन वसन्ताविर्भावेण यत् मधु तेन भ्रान्तिं भ्रमणं प्राप्य मत्ता इव जाता इति शेषः, इत्युत्प्रेक्षा, सा च मत्ततायास्तु चैतन्यधर्मित्वेनापि अचेतने तत्सम्बन्धोक्तेः तत्सम्बन्धरूपातिशयोक्त्या संसृज्यत इति । शार्दूलविक्रीडितं वृत्तम् ।

(१९) मूल इति । बकुलैः स्वनामप्रसिद्धैः तरुभिः कर्तृभिः पुष्पवृष्ट्या करणेन मूले गण्डूषसेकासवः रमणीमुखसंसिक्तमद्यमिव वाम्यते उद्गीर्यते वमनं क्रियते इत्यर्थः । अद्य मधुना आताम्रे सम्यक्लोहिते तरुण्या युवत्या मुखशशिनि मुखेन्दौ चम्पकानि चिरात् भान्ति शोभन्ते । किञ्चेति चार्थः, भृङ्गसार्थैः मधुपकुलैः अशोकेषु याः पादाहतयः तासु निर्भरमतिशयं रणतां शब्दं कुर्वतां नूपुराणां आकर्ण्य शब्दमित्यर्थात् अनुगीतैः पश्चात् तद्ध्वनिभिः झङ्कारस्य अनुकरणमारभ्यते इव इत्युत्प्रेक्षा । स्रग्धरावृत्तम् ।

राजा। वयस्य! सम्यगवधारितम्।

ततः प्रविशति वासवदत्ता काञ्चनमाला गृहीतमाल्यविलेपनव्यग्रहस्ता सागरिका विभवतश्च परिवारः।

वास। हञ्जे कञ्चणमाले! आदेसेहि मे मअरन्दुज्जाणस्स मग्गं (१)।

काञ्च। एदु एदु भट्टिणी (२)। [इति परिक्रामति]

वास। हञ्जे कञ्चणमाले! अध केत्तिअ दूरे दाणिं सो रत्तासोअपाअवो, जहिं मए भअवदो मअणस्स पूआ णिव्वत्तइदव्वा (३)।

काञ्च। भट्टिणि! आसण्णं ज्जेव्व किं ण पेक्खदि भट्टिणी? इअं क्खु सा णिरन्तरुब्भिण्णकुसुमसोहिणी भट्टिणीए परिग्गहिदा माहवीलदा, एसा क्खु अवरा णोमालिआ लदा, जाए अआलकुसुमसमुग्गमसद्धालुणा भट्टिणा अणुदिणं आआसीअदि अप्पा, ता एदं अतिक्कमिअ दीसदो ज्जेव्व सो रत्तासोअपाअवो, जहिं देवी पूअं णिव्वत्तइस्सदि (४)।

वास। ता एहि, तहिं ज्जेव्व लहुं गच्छम्ह (५)।

---

(१) हञ्जे काञ्चनमाले! आदेशय मकरन्दोद्यानस्य मार्गम्।

(२) एतु एतु भट्टिनी।

(३) हञ्जे काञ्चनमाले! अथ कियद्दूरे इदानीं स रक्ताशोकपादपः, यत्र मया भगवतः मदनस्य पूजा निर्वर्त्तयितव्या।

(४) भट्टिनि! आसन्नमेव किं न प्रेक्षते भर्त्री?। इयं खलु सा निरन्तरोद्भिन्नकुसुमशोभिनी भर्त्रा परिगृहीता माधवीलता, एषापि खलु अपरा नवमालिका लता, यस्या अकालकुसुमोद्गमश्रद्धालुना भर्त्रा अनुदिनमायास्यते आत्मा, तत् एतदतिक्रम्य दृश्यते एव स रक्ताशोकपादपः, यत्र देवी पूजां निर्वर्त्तयिष्यति।

(५) तदेहि, तत्रैव लघु गच्छामः। [लघु शीघ्रम्।]

काञ्च । एदु एदु भट्टिणी (१) । [सर्वाः परिक्रामन्ति ।]

वास । अअं सो रत्तासोअपादवो, जहिं अहं पूअं णिव्वत्तइस्सं, तेण हि मे पूआणिमित्ताइं उवअरणाइं उवणेहि (२) ।

साग । [उपसृत्य ।] भट्टिणि ! एदं सव्वं सज्जं (३) ।

वास । [निरूप्यात्मगतम् ।] अहो पमादो परिअणस्स, जस्स ज्जेव्व दंसणपधादो पअत्तेण रक्खीअदि, तस्स ज्जेव्व दिट्ठिगोअरं पडिदा भवे । भोदु एदं दाव भणिस्सं । [प्रकाशम् ।] हञ्जे साअरिए ! कीस तुमं अज्ज मअणमहूसवपराहीणे परिअणे सारिअं उज्झिअ इहागदा, ता तहिं ज्जेव्व लहुं गच्छ, एदं वि सव्वं पूओवअरणं कञ्चणमालाए हत्थे समप्पेहि (४) ।

साग । जं भट्टिणी आणवेदि । [इति तथा कृत्वा कतिचित् पदानि गत्वा आत्मगतम् ।] सारिआ मए उण सुसङ्गदाए हत्थे समप्पिदा, एदम्मि अत्थि मे पेक्खिदुं कोदूहलं,

---

(१) एतु एतु भर्त्री ।

(२) अयं स रक्ताशोकपादपः, यत्र अहं पूजां निर्वर्त्तयिष्यामि । तेन हि मे पूजानिमित्तानि उपकरणानि उपनय ।

(३) भट्टिनि ! एतत् सर्वं सज्जम् ।

(४) अहो प्रमादः परिजनस्य, यस्यैव दर्शनपथात् प्रयत्नेन रक्ष्यते तस्यैव दृष्टिगोचरं पतिता भवेत् । भवतु एतत् तावत् भणिष्यामि । हञ्जे सागरिके ! कथं त्वं अद्य मदनमहोत्सवपराधीने परिजने सारिकामुज्झित्वा अत्र आगता ? तत् तत्रैव लघु गच्छ, एतदपि सर्वं पूजोपकरणं काञ्चनमालाया हस्ते समर्पय । [प्रमादः अनवधानता । मदनमहोत्सवपराधीने मदनमहोत्सवस्य पराधीने परतन्त्रे आमोदनिरते इत्यर्थः ।]

किं जह तादस्स अन्तेउरे भअवं अणङ्गो अच्चीअदि, इदोवि तह ज्जेव्व, अध ण वेत्ति। ता अलक्खिआ भविअ पेक्खिस्सं [ परिक्रम्यावलोक्य च। ] ता जाव इह पूआसमओ होदि, ताव अहम्पि भअवन्तं मअणं ज्जेव्व पूइदुं कुसुमाइं अवचिणिस्सं। [ इति कुसुमावचयं नाटयति (१)।

वास। कञ्चणमाले! पडिट्ठावेहि असोअमूले भअवन्तं पज्जुण्णं ( २ )

काञ्च। जं भट्टिणी आणवेदि। (३) [ इति तथा करोति। ]

विदू। [ परिक्रम्यावलोक्य च। ] भो वअस्स! जधा वीसन्तो णेउरसद्दो, तथा तक्केमि आअदा देवी असोअमूलंत्ति ( ४ )।

राजा। वयस्य! सम्यक् अवधारितं, पश्य, इयं देवी, या किलैषा
कुसुमसुकुमारमूर्त्तिर्दधती नियमेन तनुतरं मध्यम्।
आभाति मकरकेतोः पार्श्वस्था चापयष्टिरिव॥ ( २० )

---

(१) यद्वर्त्ती आज्ञापयति। सारिका मया पुनः सुसङ्गताया हस्ते समर्पिता, इदमपि अस्ति प्रेक्षितुं मे कौतूहलं, किं यथा तातस्य अन्तःपुरे भगवान् अनङ्गोऽर्च्यते, अत्रापि तथैव अथ न वेति। तस्मात् अलक्षिता भूत्वा प्रेक्षिष्ये। तत् यावत् इह पूजासमयो भवति तावत् अहमपि भगवन्तं मदनमेव पूजयितुं कुसुमानि अवचेष्यामि।

(२) काञ्चनमाले! प्रतिष्ठापय अशोकमूले भगवन्तं प्रद्युम्नम्।

(३) यद्वर्त्ती आज्ञापयति।

(४) भो वयस्य! यथा विश्रान्तो नूपुरशब्दस्तथा तर्कयामि आगता देवी अशोकमूलमिति।

---

(२०) कुसुमेति। कुसुममिव सुकुमारा कोमला अवयव तानि एवेति

तदेहि उपसर्पाव:।

राजा। [ उपसृत्य ] प्रिये वासवदत्ते !।

वास। [ विलोक्य।] कधं अज्जउत्तो ! जेदु जेदु अज्जउत्तो, अलङ्करेदु इमं देसं आसणपढ़िग्गहेण, एदं आसणं एत्थ उववसिदु अज्जउत्तो ( १ )।

राजा। [ नाट्येन उपविशति। ]

काञ्च। भट्टिणि ! सहत्थदिसेहिं कुसुमकुङ्कुमचन्दणवासेहिं सोहिदं रत्तासोअपाअवं गदुअ, अच्चीअदु भअवं पज्जुस्रो ( २ )।

वास। उवणेहि मे पूअोवअरणाइं ( ३ )।

काञ्च। [ उपनयति। ]

वास। [ तथा करोति। ]

राजा। प्रिये वासवदत्ते !।

---

(१) कथमार्य्यपुत्रः। जयति जयति। आर्य्यपुत्र ! अलङ्करोतु इमं देशं आसनपरिग्रहेण, इदमासनम्, अत्रोपविशतु आर्य्यपुत्रः।

(२) भर्त्रि ! स्वहस्तदत्तैः कुसुमकुङ्कुमचन्दनवासोभिः शोभितं रक्ताशोकपादपं गत्वा, अर्च्च्यतां भगवान् प्रद्युम्नः।

(३) उपनय मे पूजोपकरणानि।

---

कामशरस्य कुसुममयत्वादिति भावः, मूर्त्तिः यस्याः सा, नियमेन व्रतोपवासादिना, अथच नियतमेव तनुतरम् अतिशयेन क्षीणं मध्यं मध्यभागं दधती धारयन्ती, अथच स्वभावत एव क्षीणं पार्श्वस्था पार्श्ववर्त्तिनी मकरकेतोः कामस्य चापयष्टिरिव इत्युत्प्रेक्षा आभाति शोभते। इं वस्तूत्प्रेक्षा। आर्य्यावृत्तम् !

प्रत्यग्रमज्जनविशेषविविक्तकान्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपिप्रभवा लतेव ॥ ( २१ )

अपि च

स्पृष्टस्त्वयैष, दयिते ! स्मरपूजाव्यापृतेन हस्तेन ।
उद्भिन्नापरमृदुतरकिसलय इव लक्ष्यतेऽशोकः ॥ ( २२ )

अपि च

अनङ्गोऽयमनङ्गत्वमद्य निन्दिष्यति ध्रुवम् ।
यदनेन न सम्प्राप्तः पाणिस्पर्शोत्सवस्तव ॥ ( २३ )

काञ्च । भट्टिणि ! अच्चिदो भअवं पज्जुण्णो, ता करेहि भत्तुणो पूआसक्कारम् ( १ ) ।

---

(१) भर्त्रि ! अर्चितो भगवान् प्रद्युम्नः, तत् कुरु भर्त्तुः पूजासत्कारम् ।

---

(२१) प्रत्यग्रेति । प्रत्यग्रमज्जनेन कामार्चनार्थं कृतस्नानविशेषेण विविक्ता परिशुद्धा कान्तिः शोभा यस्याः सा कौसुम्भरागेण रुचिरः सुन्दरः अत एव स्फुरन् अंशुकान्तो यस्याः सा त्वं मकरकेतनं मदनमर्चयन्ती, बालाः प्रवाला यस्य स तादृशात् विटपिनो वृक्षात् प्रभवः उत्पत्तिः यस्याः सा लतेव विभ्राजसे परिशोभसे इत्यर्थः । वसन्ततिलकवृत्तम् ।

(२२) स्पृष्ट इति । हे दयिते ! प्रिये ! त्वया स्मरपूजार्थे पूजायां वा व्यापृतेन प्रयुक्तेन हस्तेन करेण स्पृष्ट एषोऽशोकः तरुः उद्भिन्नानि अपराणि अन्यानि मृदुतराणि स्वपल्लवादपि पेलवानि किसलयानि यस्य स तादृश इव लक्ष्यते यस्या बाहुरेव अलौकिकः सा कीदृशी इति व्यक्तव्यं किमु इति कैमुतिकन्यायेन अर्थापत्तिः । आर्य्यावृत्तम् ।

(२३) अनङ्ग इति । अयम् अनङ्गः कामः अद्य अनङ्गत्वं स्वीयधर्मं निन्दिष्यति अवमंस्यते ध्रुवमुत्प्रेक्षे । कुत इत्याह—यत् यस्मात् अनेन अनङ्गेन तव

वास। तेण हि उवणेहि मे कुसुमाइं विलेवणञ्च (१)।

काञ्च। भट्टिणि! एदं सव्वं सज्जं (२)।

वास। [नाट्येन राजानं पूजयति।]

साग। [गृहीतकुसुमा।] हद्धी! हद्धी! कहं कुसुमलोहोक्खित्तहिअआए अदिचिरं ज्जेव्व मए किदं, ता इमिणा सिन्दुवारविडवेण ओवारिअसरीरा भविअ पेक्खामि। [विलोक्य।] कहं, पेक्खिदो ज्जेव्व अपुव्वो कुसुमाउहो, अम्हाणं तादस्स अन्तेउरे चित्तगदो अच्चीअदि, इह दु पच्चक्खो लक्खीअदि। ता अहंपि इमेहिं कुसुमेहिं इह ट्ठिदा ज्जेव्व भअवन्तं कुसुमाउहं पूअइस्सम्। [इति कुसुमानि प्रक्षिपति।] णमो दे भअवं कुसुमाउह, सुभदंसणो मे भविस्ससि, दिट्ठं जं दट्ठव्वं, अमोघदंसणो मे भविस्ससि। [इति प्रणमति।] अच्चरीअं! दिट्ठोवि, पुणो पेक्खिदव्वो, ता जाव ण कोवि मं पेक्खदि दाव ज्जेव्व गमिस्सं (३)।

---

(१) तेन हि उपनय मे कुसुमानि विलेपनञ्च।

(२) भट्टिनि! एतत् सर्वं सज्जम्।

(३) हा धिक्! हा धिक्! कथं कुसुमलोभोत्क्षिप्तहृदयया अतिचिरमेव मया कृतं, तस्मादमुना सिन्धुवारविटपेन अपवारितशरीरा भूत्वा प्रेक्षिष्ये। कथं, प्रेक्षित एव अपूर्वः कुसुमायुधः, अस्माकं तातस्य अन्तःपुरे, चित्रगतोऽर्च्यते, इह तु प्रत्यक्षो लक्ष्यते। तस्मादहमपि एतैः कुसुमैः इह स्थिता एव भगवन्तं कुसुमायुधं पूजयिष्यामि। नमस्ते भगवन् कुसुमायुध! सुभदर्शनो मे भविष्यसि। दृष्टं यद् द्रष्टव्यम्; अमोघदर्शनो मे भविष्यसि, आश्चर्यं! दृष्टोऽपि पुनः प्रेक्षितव्यः। तद्यावत न कोऽपि मां प्रेक्षते तावदेव गमिष्यामि।

---

पाणिस्पर्शः स एवोत्कर्षो न सम्भाषः, एतेन रतेरपि अस्याः सौन्दर्यं द्योत्यते। अनुद्धृतम्।

[ इति निष्क्रामति। ]

काञ्च। अज्ज वसन्तअ! एहि, सम्पदं तुमंपि सोत्थिवाअणिअं पडिच्छेहि (१)।

विदू। [ उपसर्पति। ]

वास। [ विलेपनकुसुमाभरणदानपूर्वकम्। ] अज्ज! एदं सोत्थिवाअणिअं पडिच्छेहि। [ इत्यर्पयति ] (२)।

विदू। [ सहर्षं गृहीत्वा। ] सोत्थि भोदीए। (३)

नेपथ्ये वैतालिक: पठति।

अस्तापास्तसमस्तभासि नभस: पारं प्रयाते रवौ।
आस्थानीं समये समं नृपजन: सायन्तने सम्पतन्।
सम्प्रत्येष सरोरुहद्युतिमुष: पादांस्तवासेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्ष्यते॥ २४॥

---

(१) आर्य्य वसन्तक! एहि, साम्प्रतं त्वमपि स्वस्तिवाचनिकं प्रतीच्छ।

(२) आर्य्य! इदं स्वस्तिवाचनिकं प्रतीच्छ।

(३) स्वस्ति भवत्यै।

---

(२४) अस्तेति। अस्तं अस्ताचले अपास्ता विक्षिप्ता: समस्ता अखिला भासो दीप्तय: किरणा इत्यर्थ: येन तस्मिन् रवौ सूर्ये नभसो गगनमण्डलस्य पारं प्रयाति सति अस्तं गते सति इत्यर्थ:। सायन्तने सायम्भवे समये आस्थानीं सभां समं युगपत् सम्पतन् आगच्छन् एष नृपजनो राजन्यसमूह: सम्प्रति इदानीं सरोरुहाणां पद्मानां द्युतिं मुष्णन्ति चोरयन्ति ये ते तान् एकत्र कमलशोभाजयिनोऽन्यत्र चन्द्रोदयभिया कमलिनीप्रभाहारिण इत्यर्थ:। प्रीतेरुत्कर्षं प्रकर्षं कुर्वन्ति ये तान्, अथवा प्रीत्युत्कर्षं करोति विदधाति य: स एकत्र पादविशेषणमथवा नृपजनविशेषणम्। दृशां नेत्राणाम् इन्दोरिव तदाह्लादजनकत्वात् चन्द्रस्येव उदयनस्य वत्सराजस्य पादान् चरणान् किरणांश्च उद्वीक्ष्यते पश्यति। श्लेषसङ्कीर्णेयमुत्प्रेक्षा। शार्दूलविक्रीडितम् वृत्तम्।

सागर। [श्रुत्वा, सहर्षं परिवृत्य, राजानं दृष्ट्वा सस्पृहम्। ] कधं अअं सो राआ उदअणो णाम, जस्स अहं तादेण दिण्णा, ता परपेसणदूसिदं वि मे सरीरं एदस्स दंसणेण दाणिं बहुमदं संवुत्तं (१)।

राजा। कथमुत्सवापहृतचेतोभिः सन्ध्यातिक्रमोऽपि अस्माभिर्नोपलक्षितः। देवि! पश्य

उदयगिरितटस्थमियं प्राची सूचयति निशानाथम्।
परिपाण्डुना मुखेन प्रियमिव हृदयस्थितं रमणी ॥ (२५)

देवि! तदुत्तिष्ठावः, आवासाभ्यन्तरमेव प्रविशावः।

सर्वे। [उत्थाय परिक्रामन्ति। ]

सागर। कधं पत्थिदा देवी, भोदु, ता अहम्मि तुरिअं गमिस्सं। [राजानं सस्पृहं दृष्ट्वा निश्वस्य च। ] कधं मन्दभाइणीए मए पेक्खिदुं वि चिरं ण पारिदो अअं जणो (२)। (इति निष्क्रान्ता।)

राजा। [परिक्रामन्।]

देवि! त्वन्मुखपङ्कजेन शशिनः शोभातिरस्कारिणा
पश्याब्जानि विनिर्जितानि सहसा गच्छन्ति विच्छायताम्।

---

(१) कथमयं स राजा उदयनो नाम, यस्य अहं तातेन दत्ता, तत् (तस्मात्) परपोषणदूषितमपि मे शरीरं एतस्य दर्शनेन इदानीं बहुमतं संवृत्तम्।

(२) कथं प्रस्थिता देवी, भवतु, तदहमपि त्वरितं गमिष्यामि। कथं मया मन्दभागिन्या चिरं प्रेक्षितुमपि न पारितः अयं जनः।

---

(२५) रमणी विरहविधुरा कामिनी परिपाण्डुरेण विरहव्यथाधवलेन मुखेन कपोलेन हृदयस्थितं प्रियं भर्त्तारं यथा सूचयति तथा इयं प्राची पूर्वा दिक् उदयगिरितटेषु उदयपर्वतप्रान्तेषु स्थितं निशानाथं चन्द्रं सूचयति, अनुमापयति। आर्य्यावृत्तम्।

श्रुत्वा ते परिवारवारवनितागीतानि भृङ्गाङ्गनाः
लीयन्ते मुकुलान्तरेषु शनकैः सञ्जातलज्जा इव ॥ (२६)

[ इति निष्क्रान्ताः सर्वे । ]

इति मदनमहोत्सवो नाम प्रथमोऽङ्कः समाप्तः ।

---

## अथ द्वितीयोऽङ्कः ।

ततः प्रविशति सारिकापञ्जरव्यग्रहस्ता सुसङ्गता ।

सुसं । हद्धी ! हद्धी ! अध दाणिं मम हत्थे इमं सारिअं णिक्खिविअ कहिं गदा मे पिअसही साअरिआ भविस्सदि । [ अन्यतो दृष्ट्वा । ] एसा क्खु णिउणिआ इद ज्जेव्व आअच्छदि, ता जाव एदं पुच्छिस्सं (१) ।

ततः प्रविशति निपुणिका ।

निपु । उअलद्धो क्खु मए भट्टिणो वुत्तन्तो, ता जाव गदुअ भट्टिणीए णिवेदेमि (२) ।* [ इति परिक्रामति । ]

---

(१) हा धिक्, हा धिक्, अथ इदानीं मम हस्ते इमां सारिकां निक्षिप्य कुत्र गता मे प्रियसखी सागरिका भविष्यति । एषा खलु निपुणिका इत एव आगच्छति, तद्यावदेनां प्रक्ष्यामि ।

(२) उपलब्धः खलु मया भर्तुर्वृत्तान्तः तद्यावत् गत्वा भर्त्रीं निवेदयामि ।

---

(२६) देवीति । हे देवि ! शशिनः चन्द्रस्य शशलाञ्छनस्य, शोभातिरस्कारिणा शोभाजयिना, शशाङ्कत्वात् कलङ्कित्वम् अस्तीति भावः । त्वन्मुखपङ्कजेन तवाननपद्मेन विनिर्जितानि अजानि पद्मानि सहसा कारणम् अन्तरेणैव विच्छायतां मलिनतां यान्ति । भृङ्गाङ्गना भृङ्ग्यः ते तव परिवारवारविलासिनीनां गीतानि श्रुत्वा सञ्जातलज्जा वारवनिताभ्यः पराजयादिति भावः । मुकुलान्तरेषु कुड्मलमध्ये शनकैः मन्दं मन्दं लीयन्ते लीना भवन्ति । शार्दूलविक्रीडितं वृत्तम्

सुसं। हला णिउणिए! कहिं दाणिं तुमं विह्मओक्खित्तहिअआ विअ, इह ठिदं मं अवहोरिअ कुदो अदिक्कमसि(१)

निपु। कधं पिअसही सुसङ्गदा? हला सुसङ्गदे! सुट्ठु तुए जाणिदं क्खु मम विह्मअस्स कारणं, अज्ज किल भट्टा सिरिअपव्वदादो आअदस्स, सिरिखण्डदासणामहेअस्स धम्मिअस्स सआसादो अआलकुसुमसंजणणदोहअं सिक्खिअ, अत्तणो पड़िग्गहिदं णोमालिअं कुसुमसमिद्धिसोहिअं करिस्सदित्ति, तहिं एदं वुत्तन्तं देवीए जाणिदुं पेसिदह्मि, तुमं उण कहिं पत्थिदा? (२)।

सुसं। पिअसहीं साअरिआं अण्णेसिदुं (३)।

निपु। हला! दिट्ठा मए साअरिआ गहोदसमुग्गअचित्तफलअवट्टिआ समुव्विग्गा विअ कअलीघरं पविसन्तो, ता गच्छ पिअसहि! अहं वि देवीसआसं गमिस्सं (४)।

[ इति निष्क्रान्ते प्रवेशकः * ]

---

(१) हला निपुणिके! त्वं कुत्र इदानीं विस्मयोत्क्षिप्तहृदया इव इह स्थितां माम् अवधीर्य्य कुतोऽतिक्रामसि।

(२) कथं प्रियसखी सुसङ्गता? हला सुसङ्गते! सुष्ठु त्वया ज्ञातं, इदं खलु मम विस्मयस्य कारणम्। अद्य किल भर्त्ता श्रीपर्वतात् आगतस्य श्रीखण्डदासनामधेयस्य धार्म्मिकस्य सकाशात् अकालकुसुमसंजननदोहदं शिक्षित्वा आत्मनः परिगृहीतां नवमालिकां कुसुमसमृद्धिशोभितां करिष्यतीति। तर्हि एनं वृत्तान्तं ज्ञातुं देव्या प्रेषितास्मि, त्वं पुनः क्व प्रस्थिता?

(३) प्रियसखीं सागरिकामन्वेष्टुम्।

(४) हला! दृष्टा मया (तव प्रियसखी) सागरिका गृहीतसमुद्गकचित्रफलकवर्त्तिका समुद्विग्ना इव कदलीगृहं प्रविशन्ती, तद्गच्छ प्रियसखि! अहमपि देवीसकाशं गमिष्यामि।

* प्रवेशकलक्षणं यथा :—

ततः प्रविशति गृहीतचित्रफलकवर्त्तिका मदनावस्थां नाटयन्ती सागरिका।

साग। हिअअ! पसीद, पसीद, किं इमिणा आआसमेत्तफलेण दुल्लहजणप्पत्थणाणुबन्धेण। अण्णञ्च। जेण एव्व दिट्ठेण दे ईदिसो सन्तावो ण वड्ढदि, पुणोवि, तं ज्जेव्व पेक्खिदुं अहिलससित्ति, अहो दे मूढ़दा। अइ णिसंसहिअअ! जम्मदो पहुदि सह संवड्ढिअं इमं जणं परिहरिअ, खणमेत्तदंसणपरिचिदं जणं अणुगच्छन्तो, ण लज्जेसि? अहवा को तुह दोसो, अणंगसरपड़णभीदेण तुए एव्वं अज्ज व्ववसिदं। भोदु दाव, अणङ्गं उवालहिस्सं। [सामर्षम्।] भअवं कुसुमाउह! णिज्जिदसअलसुरासुरो भविअ, इत्थिआजणं पहरन्तो, कधं ण लज्जेसि? [विचिन्त्य।] अहवा अणंगोऽसि, सव्वथा मम मन्दभाइणीए इमिणा दुण्णिमित्तेण मरणंज्जेव्व उपट्ठिदं। [फलकमवलोक्य।] ता जाव इह ण कोपि आअच्छदि, टाव आलेक्खसमप्पिदं तं अभिमदं जणं पेक्खिअ, जहा समीहिदं तहा करिस्सं (१)।

---

"प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा॥"

(१) हृदय! प्रसीद, प्रसीद, किम् अमुना आयासमात्रफलकेन दुर्लभजनप्रार्थनानुबन्धेन। अन्यच्च। येन एव दृष्टेन ते एतादृशः सन्तापो ननु वर्द्धते, पुनरपि तं (जनं) एव प्रेक्षितुम् अभिलषसीति, अहो ते मूढ़ता। अयि नृशंसहृदय! जन्मतः प्रभृति सह संवर्द्धितम् इमं जनं परित्यज्य, क्षणमात्रदर्शनपरिचितं जनम् अनुगच्छन् न लज्जसे? अथवा कः तव दोषः, अनङ्गशरपतनभीतेन त्वया एवम् अद्य व्यवसितम्। भवतु तावत्, अनङ्गम् उपालप्स्ये। भगवन् कुसुमायुध! निर्जितसकलसुरासुरो भूत्वा, स्त्रीजनं प्रहरन् कथं न लज्जसे? अथवा, अनङ्गोऽसि। सर्वथा मम मन्दभागिन्या अमुना दुर्निमित्तेन मरणमेव उपस्थितम्। तद्यावत् इह न कोऽपि

[ सावष्टम्भमेकमना भूत्वा नाट्येन फलकं गृहीत्वा निश्वस्य । ]

जइवि मे अदिसज्झसेण वेवदि अअं अदिमेत्तं अग्गहत्थो, तहवि तस्स जणस्स अण्णो दंसणोवाओ णत्थित्ति, ता जहा तहा आलिहिअ एणं पेक्खिस्सं (१) । [ इति नाट्येन लिखति । ]

ततः प्रविशति सुसङ्गता ।

सुसं । एदं क्खु कअलीघरं, ता जाव पविसामि । [ प्रविश्यावलोक्य च सविस्मयम् । ] किं उण एसा गुरुआणुराओक्खित्तहिअआ विअ किम्पि आलिहन्ती ण मं पेक्खदि, भोदु, ता जाव से दिट्ठिवहं परिहरिअ णिरूवइस्सं । [ स्वैरं पृष्ठतोऽस्याः स्थित्वा दृष्ट्वा सहर्षम् । ] कहं भट्टा आलिहिदो ? साहु साअरिए साहु, अहवा कमलाअरं वज्जिअ, राअहंसो अण्णस्सिं ण अहिरमदि (२) ।

साग । [ सवाष्पम् ] आलिहिदो मए एसो, किं उण अणवरदणिवडन्तवाप्फसलिलेण मे दिट्ठी पेक्खिदुं ण पहवदि । [ उर्द्धं अश्रूणि संहरन्ती, सुसङ्गतां दृष्ट्वा, उत्तरीयेण

---

आगच्छति तावत् आलिख्यसमर्पितं तम् अभिमतं जनं प्रेक्ष्य, यथा समीहितं तथा करिष्यामि । ( आयासीत्यत्र आशीति, सामर्षम् इत्यत्र साश्रम् इत्यपि पाठः । )

(१) यद्यपि मे अतिसाध्वसेन वेपते अयमतिमात्रमग्रहस्तः, तथापि तस्य जनस्यान्यो दर्शनोपायो नास्ति इति, तद्यथा तथा आलिख्य एनं प्रेक्षिष्ये ।

(२) इदं खलु कदलीगृहं, तद्यावत् प्रविशामि । किं पुनरेषा गुर्वनुरागोत्क्षिप्तहृदया इव किमप्यालिखन्ती न मां पश्यति, भवतु, तद्यावदस्या दृष्टिपथं परिहृत्य निरूपयिष्यामि (किमेषा आलिखतीति ) कथं भर्त्ता आलिखितः ? साधु सागरिका साधु, अथवा कमलाकरं वर्जयित्वा राजहंसो नान्यस्मिन्नभिरमते ।

फलकं प्रच्छादयन्ती विलोक्य स्मितं कृत्वा।] कहं पिअसही सुसङ्गदा, सहि सुसङ्गदे! इदो उवविस (१)।

सुसं। [उपविश्य फलकं गृहीत्वा दृष्ट्वा च।] सहि! को एसो तुए आलिहिदो? (२)।

साग। [सलज्जम्।] पउत्तमअणमहोसवे भअवं अणङ्गो (३)।

सुसं। [सस्मितम्।] अहो दे णिउणत्तणं। किं उण सुण्णं विअ चित्तं पड़िभादि, ता अहंपि आलिहिअ रइसणाधं करिस्सं (४)। [वर्त्तिकां गृहीत्वा नाट्येन रतिव्यपदेशेन सागरिकां लिखति।]

साग। [विलोक्य सक्रोधम्।] सहि सुसङ्गदे! कीदिसी तुए अहं एत्थ आलिहिदा? (५)।

सुसं। [विहस्य।] सहि! किं अआरणं कुप्पसि? जादिसो तुए कामदेवो आलिहिदो, तादिसो मए रई आलिहिदेत्ति। ता अलधा संभाविणि, किं तुए एदिणा आलविदेण, कहेहि सव्वं वुत्तन्तं (६)।

---

(१) आलिखितो मया एषः किं पुनरनवरतनिपतद्वाष्पसलिलेन मे दृष्टिः प्रेक्षितुं न प्रभवति। कथं प्रियसखी सुसङ्गता? सखि सुसङ्गते! इत उपविश।

(२) सखि! क एष त्वया आलिखितः?

(३) प्रवृत्तमदनमहोत्सवे भगवान् अनङ्गः।

(४) अहो ते निपुणत्वम्। किं पुनः शून्यमिव चित्रं प्रतिभाति, तदहमपि आलिख्य रतिसनाथं करिष्यामि।

(५) सखि सुसङ्गते! कीदृशी त्वयाहमत्र आलिखिता?

(६) सखि! किम् अकारणं कुप्यसि? यादृशस्त्वया कामदेवः आलिखितः,

साग। [स्वगतम्।] णं जाणिदह्मि पिअसहीए। [प्रकाशम्।] पिअसहि! महदी क्खु मे लज्जा, ता तहा करेसु जहा ण कोवि अवरो एदं वुत्तन्तं जाणादित्ति (१)।

सुसं। सहि! मा लज्ज, ईदिसस्स कण्णारअणस्स अवस्सं एव्व ईदिसे वरे अहिलासेण होदव्वं, तहवि जहा ण कोवि अवरो एदं वुत्तन्तं जाणिस्सदि तहा करेमि। एदाए उण मेधाविणीए सारिआए एत्थ कारणेन होदव्वं, कदावि एसा इमस्स आलावस्स गहिदक्खरा कस्सवि पुरदो मन्तइस्सदित्ति (२)।

साग। सहि! अदोवि मे अधिअदरं सन्दावो वट्टदि (३)। [इति मदनावस्थां नाटयति।]

सुसं। [सागरिकाया हृदये हस्तं दत्त्वा।] सहि!

---

मया तादृशी रतिः आलिखिता, तत् अन्यथासम्भाविनि! किं तव एतेन आलपितेन कथय सर्वं वृत्तान्तम्।

(१) ननु ज्ञातास्मि प्रियसख्या। प्रियसखि! महती खलु मे लज्जा, तत् तथा कुरुष्व यथा न कोऽपि अपर इमं वृत्तान्तं जानाति इति।

(२) सखि! मा लज्जस्व, ईदृशस्य कन्यारत्नस्य अवश्यमेव ईदृशे वरे अभिलाषेण भवितव्यम्, तथापि यथा न कोऽपि अपर इमं वृत्तान्तं ज्ञास्यति तथा करोमि। एतया पुनः मेधाविन्या सारिकया अत्र कारणेन भवितव्यम्, कदापि एषा अस्य आलापस्य गृहीताक्षरा कस्य अपि पुरतो मन्त्रयिष्यतीति। अत्र कारणेन भवितव्यम् इति सारिका एव अस्माकं रहस्यप्रकाशे कारणं भविष्यतीत्यर्थः। "गहिदक्खरा" इत्यत्र गहिदत्था इत्यपि पाठो दृश्यते।

(३) सखि! अतोऽपि मे अधिकतरं सन्तापो वर्त्तते। "अदोवि" इत्यत्र "अज्ज" इत्यपि पाठः, अद्य इति सं०।

समस्सस, समस्सस, जाव इमाए दिग्घिआए णलिणीपत्ताणि मुणालिआं अ गेह्निअ, लहुं आअच्छामि (१)

[ इत्युत्थाय परिक्रम्योपसृत्य च नलिनीपत्राणि गृहीत्वा हृदये ददाति, नलिनीपत्रैः प्रथमं मृणालैर्वलयानि रचयित्वा, परिशिष्टानि नलिनीपत्राणि सागरिकाया हृदये निक्षिपति । ]

साग। सहि! अवणेहि इमाइं णलिणीपत्ताइं मुणालवलआइं अ, अलं एदिणा, कधं अआरणे अत्ताणं आआसेसि। णं भणामि (२) :—

दुल्लहजणअणुराओ, लज्जा गरुई परव्वसो अप्पा।
पिअसहि! विसमं पेम्मं, मरणं सरणं णवरिअमेक्कं (३) ॥१॥

[ इति मूर्च्छति। ]

[ नेपथ्ये कलकलः। ]

---

(१) सखि! समाश्वसिहि समाश्वसिहि, यावदस्या दीर्घिकाया नलिनीपत्राणि मृणालिकाञ्च गृहीत्वा लघु आगच्छामि।

(२) सखि! अपनय इमानि नलिनीपत्राणि मृणालवलयानि च, अलमेतेन, कथमकारणेन आत्मानमायासयसि। ननु भणामि।

(३) दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा।
प्रियसखि! विषमं प्रेम मरणं शरणं केवलमेकम्।

---

(१) दुर्लभेति। दुर्लभे दुःखेन प्राप्तुं शक्ये जने मम अनुरागः उदयननृपतिः मम हृदयप्रियो जनः स तु मम दुष्प्राप इति भावः। लज्जा त्रपा गुर्वी गुरुतरा, अतः कारणात् स्वयमपि आत्मानं समर्पयितुं न शक्नोमि, आत्मापि मे मम परवशः पराधीनः प्रियसखि! सुसङ्गते! मे मम प्रेम विषमं अतिदारुणम्, अतिदुरन्तम् अनुरागमपि त्यक्तुं न शक्नोमि, अत एव मे मम मरणमेव एकम् केवलं शरणम्। मरणेनैव मद्दुःखनिचयस्य निवृत्तिर्भविष्यति, इति फलितार्थः। यतः अहं वासवदत्तायाः देव्याः दासी मम हृदयचौरो अनघ नृपतिः। आर्य्यावृत्तम्।

कण्ठे कृत्तावशेषं कनकमयमधः शृङ्खलादाम कर्षन्
क्रान्त्वा द्वाराणि हेलाचलचरणरणत्किङ्किणीचक्रवालः।
दत्तातङ्को गणानामनुसृतसरणिः सम्भ्रमादश्वपालैः
प्रभ्रष्टोऽयं प्लवङ्गः, प्रविशति नृपतेर्मन्दिरं मन्दुरायाः॥ (२)

अपिच

नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपाम्
अन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः।
पर्य्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः॥ (३)

सुसं। [आकर्ण्य ससम्भ्रमम्।] सहि! उट्ठेहि, उट्ठेहि, एसो क्खु दुट्ठवाणरो इदोज्जेव्व आअच्छदि (१)।

साग। सखि! किं दाणिं करेह्म (२)।

---

(१) सखि! उत्तिष्ठ, उत्तिष्ठ, एष खलु दुष्टवानर इत एवागच्छति।

(२) सखि! किमिदानीं कुर्मः।

---

(२) कण्ठ इति। कण्ठे कृत्तस्य छिन्नस्य अवशेषम् अवशिष्टं कनकमयं सौवर्णं शृङ्खलादाम बन्धनरज्जुपाशं अधःकर्षन् तथा द्वाराणि क्रान्त्वा आक्रम्य उल्लङ्घ्येत्यर्थः। हेलया लीलावशेन चलयोः चपलयोः चरणयोः रणत् सशब्दं किङ्किणीचक्रवालं क्षुद्रघण्टिकासमूहो यस्य सः, अत एव गणानां उत्सवदर्शनार्थं समागतलोकवृन्दानां दत्तातङ्कः दत्तभयः, अश्वपालैः अश्वरक्षकैः सम्भ्रमात् वेगात् अनुसृतसरणिः कृतानुसरणः मन्दुरायाः अश्वशालायाः प्रभ्रष्टः सन् अयं प्लवङ्गः कपिर्नृपतेः महाराजस्य मन्दिरं गृहं प्रविशति। शार्दूलविक्रीडितम् वृत्तम्।

(३) नष्टमिति। वर्षवरैः क्लीवैः मनुष्येषु मध्ये गणनाया अभावात् हेतोः त्रपां लज्जां अपास्य हित्वा नष्टम् अदृष्टं पलायितमित्यर्थः। अयं वामनः खर्वः, त्रासात् कञ्चुकिनां कञ्चुकस्य अन्तस्तदपेक्षयापि भूमिः अभ्यन्तरं विशति। पर्य्यन्तं प्रान्तभागं आश्रयन्ति ये ते; किरातैः व्याधैः नाम्नः सदृशं किरमवति गच्छति इति

सुसं । एहि इमस्सिं तमालविड़वान्धआरे पविसिअ एदं अदिवाहेम्ह (१) । [ परिक्रम्य उभे एकान्ते पर्य्युपस्थिते । ]

साग । सुसङ्गदे ! कधं तुए चित्तफलओ उज्झिदो, कदावि कोवि तं पेक्खदि (२) ।

सुसं । अइ सुत्थिदे ! किं अज्जवि चित्तफलएण करिस्ससि, एसोवि दधिभत्तलम्पटो एदं पञ्जरं उग्घाड़िअ दुट्ठवाणरो अदिक्कन्तो, एसा क्खु मेहाविणी उड्डीणा अण्णदो गच्छदि, ता एहि लहुं अणुसरेम्ह, इमस्स आलावस्स गहिदक्खरा कस्सवि पुरदो मन्तइस्सदि ( ३ ) ।

साग । सहि ! एव्वं करेम्ह (४) । [ इति परिक्रामतः । ]

नेपथ्ये । ही ही भो अच्चरिअं अच्चरिअं (५) ।

साग । [ विलोक्य । ] सुसङ्गदे ! जाणीअदि कहं, पुणोवि दुट्ठवाणरो उजेव्व आअच्छदि ( ६ ) ।

---

(१) एहि अस्मिन् तमालविटपान्धकारे प्रविश्यैनमतिवाहयामः । अतिवाहयामः इति अतिक्रमाम इत्यर्थः ।

(२) सुसङ्गते ! कथं त्वया चित्रफलक उज्झितः, कदापि कोऽपि तं प्रेक्षते ।

(३) अयि सुस्थिते ! किमद्यापि चित्रफलकेन करिष्यसि, एषोऽपि दधिभक्तलम्पट इदं पञ्जरमुद्घाट्य दुष्टवानरोऽतिक्रान्तः, एषा खलु मेधाविनी उड्डीना अन्यतो गच्छति, तस्मादागच्छ लघु अनुसरामः, अस्यालापस्य गृहीताक्षरा कस्यापि पुरतो मन्त्रयिष्यति । ( दधिभक्तलम्पटः दधिभक्तप्रियः । )

(४) सखि ! एवं कुर्मः ।

(५) ही ही भोः आश्चर्य्यम् आश्चर्य्यम् ।

(६) सुसङ्गते ! ज्ञायते कथं पुनरपि (एष) दुष्टवानर एव आगच्छति ।

---

स्वनामसार्थक्यं कृतमित्यर्थः । कुब्जा आत्मं चपलाङ्गिनः कपिकर्म्मकदर्थ्यमानाशङ्कमाना नीचतयैव शनकैः अल्पं यान्तीत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ।

सुसं। [ दृष्ट्वा विहस्य। ] अइ कादरे। ण भेहि, भट्टिणो परिवासवत्ती क्खु एसो अज्जवसंतओ (१)।

ततः प्रविशति विदूषकः।

विदू। ही ही भोः! अच्चरिअं अच्चरिअं, साहु रे सिरिखण्डदास धम्मिअ, साहु (२)।

साग। [ सस्पृहमवलोकयति। ]

सुसं। सहि! किं एदिणा दिट्ठेण दूरीभूता क्खु सारिआ, ता एहि, अणुसरेह्म (३)। [ इति निष्क्रान्ते। ]

विदू। साहु रे सिरिखण्डदास धम्मिअ! साहु, जेण दिण्णमेत्तेण एव्व तेण दोहलेण ईदिसी णोमालिआ संवुत्ता, जेण णिरन्तरुब्भिसकुसुमगुच्छसोभिअविडवा उवहसन्ती विअ लक्खीअदि देवीपरिगहिदं माहवीलदं ता जाव गदुअ पिअवअस्सस्स णिवेदेमि। [ परिक्रम्यावलोक्य च। ] एसो क्खु पिअवअस्सः तस्स दोहदस्स लद्धपच्चअदाए परोक्खं पि णमालिअं पच्चक्खं विअ कुसुमिदं पेक्खन्तो, हरिसुप्फुल्ल लोअणो इदो एव्व आअच्छदि। ता जाव णं उवसप्पामि (४) [ इति राजानं प्रति निर्गतः। ]

(१) अयि कातरे! न बिभेहि, भर्तुः परिपार्श्ववर्त्ती खलु एष आर्य्यवसन्तकः।

(२) ही ही भोः! आश्चर्यम् आश्चर्यम्, साधु रे श्रीखण्डदास धार्म्मिक! साधु

(३) सखि! किम् एतेन दृष्टेन, दूरीभूता खलु सारिका, तत् आगच्छ अनुसरावः।

(४) साधु रे श्रीखण्डदास धार्म्मिक! साधु, येन दत्तमात्रेण एव तेन दोहदेन ईदृशी नवमालिका संवृत्ता, येन निरन्तरोद्भिन्नकुसुमगुच्छशोभितविटपा उपहसन्ती लक्ष्यते देवीपरिगृहीतां माधवीलतां, तत् यावत् गत्वा प्रियवयस्यस्य निवेदयामि एष खलु प्रियवयस्यः तस्य दोहदस्य लब्धप्रत्ययतया परोक्षामपि तां नवमालिकां प्रत्यक्षामिव कुसुमितां प्रेक्षमाणः हर्षप्रफुल्ललोचनः इत एव आगच्छति। तद्यावत् एनं उपसर्पामि।

ततः प्रविशति यथानिर्दिष्टो राजा ।

राजा । [ सहर्षम् । ]

उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणात्
आयासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥ (४)

तदुद्वृत्तान्तमुपालब्धुं गतोऽसौ वसन्तको नाद्याप्यायाति ।

विदूषकः । [सहसोपसृत्य । ] जअदु जअदु पिअवअस्सो, भो वअस्स ! दिट्ठिआ वड्ढसि, जेण दिट्ठमेत्तेण (१) [ इति पुनः पठति । ]

राजा । वयस्य ! कः सन्देहः "अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः"। पश्य

कण्ठे श्रीपुरुषोत्तमस्य समरे दृष्ट्वा मणिं शत्रुभिः
नष्टं मन्त्रबलादहमस्मि वसुधामूले भुजङ्गा हताः ।
पूर्वं लक्ष्मणवीरवानरभटा ये मेघनादाहताः
पीत्वा ते च महौषधेर्गुणनिधेर्गन्धं पुनर्जीविताः ॥ (५)

(१) जयति जयति प्रियवयस्यः, भो वयस्य ! दिष्ट्या वर्द्धसे येन दृष्टमात्रेण इत्यादि ।

(४) उद्दामेति । उद्दामोत्कलिकां अधोत्कण्ठितां विपाण्डुररुचं पाण्डुवर्णां क्षणात् प्रारब्धजृम्भां जृम्भां कुर्वतीमित्यर्थः । अविरलैः घनैः श्वसनोद्गमैः वाय्वीद्रेकैः आत्मनः आयासं क्लेशमातन्वतीं जनयन्तीम् इमाम् उद्यानलतां नवमालिकां अद्य अस्मिन् क्षणे समदनां कामशरजर्जरितामन्यां नारीमिव पश्यन् देव्या वासवदत्तायाः मुखं, कोपेन विपाटला द्युतिः यस्य तत् तादृशम् अहं करिष्यामि ध्रुवं खलु । शार्दूलविक्रीडितम् वृत्तम् ।

(५) कण्ठ इति । श्रीपुरुषोत्तमस्य श्रीरामचन्द्रस्य कण्ठे समरे त्रेतायुगे रामरावणयोः युद्धे मणिं नागपाशास्त्रसम्बन्धसमुजगमणिं दृष्ट्वा शत्रुभिः इन्द्रजित्प्रमुख-

तदादेशय मार्गं, येन वयम् अद्य तदवलोकनेन चक्षुषः फलमनुभवामः ।

विदू । [ साटोपम् । ] एदु एदु भवं । (१)

राजा । गच्छ अग्रतः ।

[ उभौ सगर्वं परिक्रामतः ] ।

विदू । [ आकर्ण्य, सभयं निवृत्य, राजानं गृहीत्वा, ससम्भ्रमम् । ] भो वअस्स ! एहि पलाअम्ह (२) ।

राजा । किमर्थम् ?

विदू । भो ! एदस्सिं वउलपादवे कोवि भूदो पडि-वसदि (३) ।

राजा । धिङ्मूर्ख ! विस्रब्धं गम्यतां, कुत ईदृशानाम् अत्र सम्भवः ।

विदू । फुड्डक्खरं एव्व मन्तेदि, जइ मम वअणं ण पत्ति-आअसि, ता वमादो भविअ, सअं एव्व दाव आअण्णेहि । (४)

(१) एतु एतु भवान् ।

(२) भो वयस्य ! एहि पलायावहे ।

(३) भो ! अस्मिन् वकुलपादपे, कोऽपि भूतः प्रतिवसति ।

(४) स्फुटाक्षरमेव मन्त्रयति, यदि मम वचनं न प्रत्येषि, तदग्रतो भूत्वा, स्वयमेव तावदाकर्णय ।

सर्पादिभिः नष्टं पलायितं स्वमरणाशङ्कया इति भावः । मन्त्रबलात् हृता हृतवीर्य्याः भुजङ्गाः सर्पा वसुधामूले वसन्ति । मन्त्रौषधिवशः सर्प इति न्यायात् इति भावः । पूर्वं तदानीन्तनसमये लक्ष्मणवीरस्य सौमित्रेर्यं वानरभटा वानरबलानि मेघनादेन आहृता नागपाशास्त्रेण संज्ञालोपं प्रापितास्ते गुणनिधेः गुणाकरस्य महौषधेः माहा-त्म्यानीतविशल्यकरणीनामकस्य औषधस्य गन्धं पीत्वा आघ्राय पुनः जीविता जीवित-वन्तः । तेन म ... पधादीनामपरिमितशक्तिकत्वमिति भावः । नागपाशास्त्र-प्रकरणं वाल्मीकि ... लङ्काकाण्डेऽनुसन्धातव्यमिति । शार्दूलविक्रीडितं वृत्तम् ।

[ राजा तथा कृत्वा श्रुत्वा च। ]

स्पष्टाक्षरमिदं तावन्मधुरं स्त्रीस्वभावतः।
अल्पाङ्गत्वादनिह्रादि मन्ये वदति सारिका॥ (६)

[ ऊर्द्ध्वं निरूप्य स्मितं कृत्वा। ] सारिका इयम्।

विदू। [ ऊर्द्ध्वं निरूप्य। ] कधं सच्चं एव्व सारिका? (१)

राजा। [ विहस्य। ] एवम्।

विदू। भो वअस्स! तुमं भआलुओ, जेण सारिअं भूदेत्ति मन्तेसि (२)।

राजा। धिङ्मूर्ख! यदात्मकृतं तत् मयि सम्भावयसि।

विदू। भो! जइ एव्वं मा क्खु मं णिवारेसि। [ सरोषं दण्डकाष्ठमुद्यम्य। ] आः सारिए दासिए! तुमं जाणासि सच्चं एव्व बह्मणो भाअदि त्ति, ता इमिणा पिसुणजणहिअअकुडिलेण दण्डकट्ठेण परिपक्कं विअ कइत्थफलं, इमादो बउलपादवादो आहणिअ पाडइस्सं (३)। [ इति हन्तुमुद्यतः। ]

राजा। [ निवारयन्। ] मूर्ख! श्रूयताम्, किमपि

---

(१) कथं सत्यमेव सारिका?

(२) भो वयस्य! त्वं भयालुकः (भीरुः) येन सारिकां भूत इति मन्त्रयसि।

(३) भो! यद्येवं (तदा) मा खलु मां निवारयसि। आः दासि सारिके! त्वं जानासि सत्यमेव ब्राह्मणो बिभेतीति, तदनेन पिशुनजनहृदयकुटिलेन दण्डकाष्ठेन, परिपक्कमिव कपित्थफलं, अस्मात् वकुलपादपात् आहत्य पातयिष्यामि।

---

(६) स्पष्टेति। स्पष्टानि अक्षराणि यत्र तदिदं स्त्रीस्वभावतः तावन्मधुरं अल्पाङ्गत्वात् क्षुद्रदेहत्वात् अनिह्रादि अनुच्चैः वाक्यमित्यर्थात् सारिका वदतीत्यर्थः।

एषा रमणीयं व्याहरति, तत् किम् एनां त्रासयसि। [उभौ आकर्णयतः।]

विदू। [आकण्ण्य।] एव्वं भणादि, इमस्स बह्मणस्स भोजनं दिज्ज इति (१)।

राजा। सर्व्वमपि औदरिकस्य—"अभ्यवहार एव पर्य्यवस्यति, तत् सत्यं वद किम् आलपति सारिका।

विदू। [आकण्ण्य] एव्वं भणादि, सहि! कीदिसी तुए अहं एत्थ आलिहिदा? सहि! किं अआरणं कुप्पसि? जादिसो तुए कामदेवो आलिहिदो, तादिसी रदी मए आलिहिदेत्ति, ता भो वअस्स! किं णेदं (२)।

राजा। वयस्य! एवं तर्कयामि, कयापि हृदयवल्लभोऽनुरागात् अभिलिख्य कामदेवव्यपदेशेन सखीपुरतः अपह्नुतः, तत्सख्या अपि प्रत्यभिज्ञाय वैदग्ध्यात् असौ अपि तत्र एव रतिव्यपदेशेन आलिखिता इति।

विदू। भो वअस्स! जुज्जदि जुज्जदि (३)। [इति छोटिकां ददाति।]

राजा। भो वयस्य! तूष्णीं भव, पुनरपि व्याहरति, तच्छृणुवस्तावत्। [उभावपि शृणुतः।]

---

(१) एवं भणति, इमस्य ब्राह्मणस्य भोजनं देहीति।

(२) एवं भणति, सखि! "कीदृशी त्वयाऽहमत्र आलिखिता? सखि! किम् अकारणं कुप्यसि? यादृशस्त्वया कामदेव आलिखितस्तादृशी रतिर्मया आलिखिता इति, तस्मात् भो वयस्य! किं नु इदम्।

(३) भो वयस्य! युज्यते युज्यते।

विदू। भो वअस्स! एव्वं भणादि। "सहि! मा लज्ज, ईदिसस्स कसारअणस्स अवस्सं एव्व ईदिसे वरे अहिलासेण होदव्व" (१)।

राजा। अस्ति काचिद्युक्तिः।

विदू। भो वअस्स! मा पण्डिअगव्वं उव्वह, अहं दे एदाए मुहादो सुणिअ, सव्वं वाक्खाणइस्सं, जा एसा आलिहिदा सा कसा दंसणीआ (२)।

राजा। वयस्य! यदि एवमवहितैः एव श्रोतव्यम् अस्त्यवकाशो नः कुतूहलस्य।

विदू। भो वअस्स! सुदं तुए, जं एदाए मन्तिदं? "सहि! अवणेहि इमाइं णलिणीपत्ताइं मुणालवलआइं अ, अलं एदिना, कधं अआरणं अत्ताणं आआसेसि" (३)।

राजा। वयस्य! न केवलं श्रुतम् अभिप्रायोऽपि बुद्धः।

विदू। भो! अज्जवि कुक्कुराअदि एव्व एसा सारिआ, दासीए धीआ, ता सव्वं सुणिअ वाक्खाणइस्सं (४)।

राजा। युक्तम् अभिहितम्। [ पुनराकर्णयतः। ]

---

(१) भो वयस्य! एवं भणति,—"सखि! मा लज्जस्व, ईदृशस्य कन्यारत्नस्य अवश्यमेव ईदृशे वरे अभिलाषेण भवितव्यम्।

(२) भो वयस्य! मा पाण्डित्यगर्वमुद्वह, अहं ते एतस्या मुखात् श्रुत्वा, सर्वं व्याख्यास्यामि, या एषा आलिखिता सा कन्या दर्शनीया।

(३) भो वयस्य! श्रुतं त्वया यदेतया मन्त्रितम्। सखि! अपनय इमानि नलिनीपत्राणि मृणालवलयानि च, अलमेतेन, कथमकारणेन आत्मानमायासयसि।

(४) भो! अद्यापि कुक्कुरायत्येव एषा सारिका, दास्याः पुत्री, तत् सर्वं श्रुत्वा व्याख्यास्यामि।

विदू। भो वअस्स! एसा क्खु सारिआ, दासीए दुहिदा, चउव्वेदी बह्मणो विअ, रिचाइं भणिदुं पउत्ता (१)।

राजा। वयस्य! कथय किमपि अन्यचेतसा मया न अवधारितं, किम् अनया उक्तमिति।

विदू। भो! एव्वं भणादि। (२) (दुल्लहजण इत्यादि पुनः पठति।)

राजा। वयस्य! एवंविधं भवन्तं ब्राह्मणं मुक्ता, कोऽन्य एवंविधानाम् ऋचामभिज्ञः?

विदू। तदो किं णु एदं? (३)।

राजा। ननु गाथिका इयम्।

विदू। किं गाथिआ, तदो किं कहिआ? (४)।

राजा। वयस्य! कया अपि श्लाघ्ययौवनया प्रियतमम् अनासादयन्त्या जीवितनिरपेक्षया उक्तम्।

विदू। [उच्चैर्विहस्य।] भोः किं एदेहिं वक्कभणिदेहिं? उजुअं एव्व किं ण भणासि, जह मं एव्व अणासादअन्तीए त्ति, अमहा को असो कुसुमचावव्ववदेसेण णिह्नवीअदि (५)।

[हस्ततालं दत्त्वा उच्चैर्विहसति।]

राजा। [ऊर्द्ध्वमवलोक्य।] धिङ्मूर्ख! किम् उच्चैर्विह-

---

(१) भो वयस्य! एषा खलु सारिका, दास्या दुहिता, चतुर्वेदी ब्राह्मण इव, ऋचः पठितुं प्रवृत्ता।

(२) भो! एवं भणति।

(३) तदा किं नु एतत्?

(४) किं गाथिका, तदा किं कथ्यताम्?

(५) भोः! किमेतैर्वक्रभणितैः? ऋजुकमेव किं न भणसि, यथा मामेव अनासादयन्त्या इति, अन्यथा कोऽन्यः कुसुमचापव्यपदेशेन निह्नूयते।

सता त्वया त्रासिता इयं, येन उड्डीय अन्यत्र क्वापि गता। [ इति निरूपयतः। ]

विदू। [ विलोक्य। ] एसा कश्रलीघरं एव्व गदा, ता एहि श्रणुसरेह्न (१)। [ इति परिक्रामतः। ]

राजा। दुर्वारां कुसुमशरव्यथां वहन्त्या
तन्वङ्ग्या यदभिहितं पुरः सखीनाम्।
तद्भूयः शिशुशुकसारिकाभिरुक्तं
धन्यानां श्रवणपथातिथित्वमेति ॥ (७)

विदू। भो वश्रस्स! एदं क्खु कश्रलीघरश्रं, जाव पविसह्न। [ इति प्रविशतः। ] किं एदाए दासीए धीश्राए सारिश्राए। इह दाव मन्दमारुदुव्वेलन्तबालकश्रलीदलसीश्रले सिलातले उपविसिश्र, मुहुत्तश्रं वीसमह्न (२)।

राजा। यत् अभिरुचितं भवते। [ इत्युपविशतः। ] [दुर्वारामित्यादि पुनः पठति। ]

---

(१) एषा कदलीगृहमेव गता, तदागच्छ अनुसराव:।

(२) भो वयस्य! इदं खलु कदलीगृहं, यावत् प्रविशाव:। किमेतया दास्याः पुत्र्या सारिकया। इह तावन्मन्दमारुतोद्वेल्लद्बालकदलीदलशीतले शिलातले उपविश्य, मुहूर्त्तं विश्राम्याव:।

---

(७) दुर्वारामिति। दुर्वारां वारयितुमशक्यां कुसुमशरव्यथां कामजनितपीड़ां वहन्त्या धारयन्त्या तन्वङ्ग्या चीणाङ्ग्या सखीनां पुरोऽग्रे यत् अभिहितं कथितं, शिशवो ये शुकाः सारिकाश्च ताभिः उक्तं तद्वचः भूयः पुनर्धन्यानां वाक्यश्रवणेनैव कृतार्थानाम् अस्माकं श्रवणपथस्य अतिथित्वं श्रवणगोचरताम् एति, पुनस्तत् श्रूयते इत्यर्थः। प्रहर्षिणी वृत्तम्।

विदू। [ पार्श्वतोऽवलोक्य। ] भो वअस्स! एदेण उग्घाड़िअदुवारेण दुट्ठवाणरेण, ताए सारिआए पञ्जरेण होदव्वं (१)।

राजा। वयस्य! निरूप्यताम्।

विदू। जं भवं आणवेदि। [ परिक्रम्यावलोक्य च। ] एस चित्तफलओ, जाव णं गेह्णामि। [ गृहीत्वा निरूप्य च सहर्षम्। ] भो वअस्स! दिट्ठिआ वड्ढसे (२)।

राजा। [ सकौतुकम्। ] वयस्य! किमेतत्?

विदू। भो एदं तं जं मए भणिदं, तुमं ज्जेव्व एत्थ आलिहिदो, अण्णहा को अण्णो कुसुमचावव्ववदेसेण णिह्नवीअदि त्ति (३)।

राजा। [ सहर्षं हस्तौ प्रसार्य्य। ] सखे! दर्शय।

विदू। ण दे दंसइस्सं। सावि कण्णआ एत्थ एव्व आलिहिदा, ता किं पारितोसिएण विणा ईदिसं कण्णारअणं दंसीअदि? (४)।

राजा। [ कण्ठकमर्पयन्नेव बलाद्गृहीत्वा पश्यति। विलोक्य सविस्मयम्। ]

वयस्य! पश्य,

---

(१) भो वयस्य! एतेन उद्घाटितद्वारेण दुष्टवानरेण तस्याः सारिकायाः पञ्जरेण भवितव्यम्।

(२) यद्भवान् आज्ञापयति। एष चित्रफलकः, यावदेनं गृह्णामि। भो वयस्य! दिष्ट्या वर्द्धसे।

(३) भो एतत् तत् यन्मया भणितम्, त्वमेवात्र आलिखितः, अन्यथा कोऽन्यः कुसुमचापव्यपदेशेन निह्नूयते इति।

(४) न ते दर्शयिष्यामि। सापि कन्यका अत्रैव आलिखिता। तत् किं पारितोषिकेण विना ईदृशं कन्यारत्नं दर्श्यते?

लीलावधूतपद्मा कथयन्ती पक्षपातमधिकं नः।
मानसमुपैति केयं चित्रगता राजहंसीव ॥ (८)

अपि च।

विधायापूर्वपूर्णेन्दुमस्या मुखमभूद् ध्रुवम्।
धाता निजासनाम्भोजविनिमीलनदुःखितः ॥ (९)

ततः प्रविशति सुसङ्गता सागरिका च।

सुसं। ण समासादिदा अम्हेहिं सारिआ, ता चित्तफलअंवि दाव इमादो कअलीघरादो गेण्हिअ, लहुं आगच्छम्ह (१)।

साग। सहि! एव्वं करेम्ह (२)। [इत्युपसर्पतः।]

विदू। भो वअस्स! कीस उण एसा अवणदमुही आलिहिदा? (३)।

---

(१) न समासादिता अस्माभिः सारिकाः, तच्चित्रफलकमपि तावत् अस्मात् कदलीगृहात् गृहीत्वा, लघु आगच्छामि।

(२) सखि! एवं कुर्मः।

(३) भो वयस्य! किं पुनरेषा अवनतमुखी आलिखिता?

---

(८) लीलेति। लीलया विभ्रमादिना लीलायां च अवधूतं तिरस्कृतं कम्पितञ्च पद्मं यया सा नोऽस्माकं पक्षपातमानुकूल्यं पक्षयोः पातं क्षेपञ्च कथयन्ती विदधती चित्रगता आलेख्यलिखिता राजहंसीव केयं मानसं चित्तं सरोवरञ्च उपैति। श्लिष्टोपमा। आर्यावृत्तम्।

(९) विधायेति। धाता विधिः अस्या मुखम् अपूर्वपूर्णेन्दुम् अभूतपूर्वं चन्द्रमसं विधाय कृत्वा निजासनाम्भोजस्य यद्विनिमीलनं मुकुलीभावस्तेन दुःखितोऽभूत्, ध्रुवमुत्प्रेक्षायाम्। चन्द्रस्य उदये पद्मसङ्कोचनं भवति इति भावः। अनुष्टुब्वृत्तम्।

सुसं । [ आकर्ण्य ] सहि ! जहा वसन्तओ मन्तेदि तहा तक्केमि भट्टिणावि एत्थ एव्व होदव्वं, ता कअलीघर-गुम्मन्तरिआ भविअ सुणह्म (१) । [ इत्युभे आकर्णयतः । ]

राजा । वयस्य ! पश्य पश्य ।

[ विधायापूर्वपूर्णेन्दुमित्यादि पुनः पठति । ]

सुसं । सहि ! दिट्ठिआ वड्ढसे, एसो दे वल्लभो, तुमं एव्व वण्णेदि (२) ।

साग । [ सलज्जम् ] सहि ! कीस परिहाससीलदाए इमं जणं लहुं करेसि ? (३) ।

विदू । [ राजानं चालयित्वा । ] णं भणामि, कीस एसा अवणदमुही आलिहिदा ? (४) ।

राजा । वयस्य ! सारिकया एव सकलम् आवेदितम् ।

सुसं । सहि ! दंसिदं सारिआए अत्तणो मेहावित्तणं (५) ।

विदू । अवि सुहाअदि दे लोअणं णवेत्ति ? (६) ।

साग । [ आकर्ण्य स्वगतं ससाध्वसम् । ] ण जाणे कीस एसो भणिस्सदि, जं सच्चं एव्व मरणजीविदाणं अन्तरे अहं वट्टामि । (७)

---

(१) सखि ! यथा वसन्तको मन्त्रयति, तथा तर्कयामि भर्त्रापि इहैव भवितव्यम्, तत् कदलीगृहगुल्मान्तरिता भूत्वा शृणुवः ।

(२) सखि ! दिष्ट्या वर्द्धसे, एष ते वल्लभस्त्वामेव वर्णयति ।

(३) सखि ! किं परिहासशीलतया इमं जनं लघुं करोषि ?

(४) ननु भणामि, कथमेषा अवनतमुखी आलिखिता ?

(५) सखि ! दर्शितं सारिकया आत्मनो मेधावित्वम् ।

(६) अपि सुखयति ते लोचनं न वेत्ति ?

(७) न जाने किमेषा भणिष्यति, यत्सत्यमेव मरणजीवितयोरन्तरेऽहं वर्त्ते ।

राजा। वयस्य! सुखयतीति किम् उच्यते, पश्य;—
कृच्छ्रादूरुयुगं व्यतीत्य, सुचिरं भ्रान्त्वा नितम्बस्थले
मध्येऽस्यास्त्रिवलीतरङ्गविषमे निष्पन्दतामागता।
मद्दृष्टिस्तृषितेव सम्प्रति शनैरारुह्य तुङ्गौ स्तनौ
साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने॥ (१०)

सुसं। सहि! सुदं तुए? (१)।

साग। तुमं एव्व सुणु, जाए आलेक्खविखासो वस्सीअदि(२)।

विदू। [ फलकं निर्वर्ण्य। ] भो वअस्स! जस्स इदीसीओवि एव्वं पिअसमागमं बहु मसन्ति, तस्सवि उवरि अत्तणो को पराहवो जेण एत्थ एव्व ताए आलिहिदं अत्ताणअं ण पेक्खसि (३)।

राजा। [ निर्वर्ण्य। ] वयस्य! अनया लिखितोऽहमिति यत् सत्यम्, आत्मन्येव बहुमानः, तत्कथं न पश्यामि? पश्य।

---

(१) सखि! श्रुतं त्वया?

(२) त्वमेव शृणु, यस्या आलेख्यविन्यासो वर्ण्यते।

(३) भो वयस्य! यस्य ईदृश्योऽपि एवं प्रियसमागमं बहु मन्यन्ते तस्यापि (ते) उपरि आत्मनः कः पराभवः, येन इहैव तया आलिखितम् आत्मानं न पश्यसि।

---

(१०) कृच्छ्रादिति। मद्दृष्टिः कर्त्री कृच्छ्रादतिकष्टेन अस्या ऊरुयुगं व्यतीत्य अतिक्रम्य नितम्बस्थले जघनप्रदेशे सुचिरं बहुक्षणं भ्रान्त्वा परिभ्रम्य त्रिवल्य एव तरङ्गाः तदाकाराः तैः विषमे मध्ये मध्यभागे निष्पन्दतामागता, तत्र स्थिता न अन्यत्र गन्तुमिच्छति इत्यर्थः। सम्प्रति तृषितेव अपरितृप्तेव तृष्णार्त्ता चातकपक्षिणी इवेति ध्वनिः, शनैः मन्दं तुङ्गौ स्तनौ आरुह्य साकाङ्क्षं यथा तथा जललवप्रस्यन्दिनी अश्रुजलपरिपूर्णे लोचने मुहुरीक्षते। शार्दूलविक्रीड़ितं वृत्तम्।

भाति पतितो लिखन्त्यास्तस्या बाष्पाम्बुशीकरकणौघः।
स्वेदोद्गम इव करतलसंस्पर्शादेव मे वपुषि॥ (११)

साग। [आत्मगतम्।] हिअअ! समस्सस समस्सस, मणोरहोवि दे एत्तिअं भूमिं गदो (१)।

सुसं। सहि! तुमं एव्व धण्णा, सलाहणीआ अ, जाए भट्टा एव्वं सन्तोसीअदि (२)।

विदू। [पार्श्वतोऽवलोक्य। भो वअस्स! एदं अवरं सरस-कमलिणीदलमुणालविरइदं इमाए एव्व मअणावत्थासूअअं लक्खीअदि (३)।

राजा। वयस्य! निपुणम् उपलक्षितम्। तथाहि;—

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम्।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति नलिनीपत्रशयनम्॥ (१२)

---

(१) हृदय! समाश्वसिहि, समाश्वसिहि, मनोरथोऽपि ते एतावतीं भूमिं गतः।

(२) सखि! त्वमेव धन्या श्लाघनीया च, यया भर्त्ता एवं सन्तोष्यते।

(३) भो वयस्य! इदमपर सरसकमलिनीदलमृणालविरचितम् अस्या एव मदनावस्थासूचकं लक्ष्यते।

---

(११) भातीति। लिखन्त्याः तस्याः करतलसंस्पर्शात् एवं पतितो वाष्पाम्बूनां शीकरकणानामोघः समूहः मे मम वपुषि देहे स्वेदोद्गमः पुलकोद्रेक इव भाति इत्युत्प्रेक्षा। आर्य्यावृत्तम्।

(१२) परिम्लानमिति। पीनयोः तुङ्गयोः स्तनयोः जघनयोश्च सङ्गात् सम्पर्कात् उभयतः उभयपार्श्वे परिम्लानं म्लानिमाप्तं तनोः कृशतायुक्तस्य मध्यस्य मध्यभागस्य अन्तः मध्ये परिमिलनं संस्पर्शमप्राप्य हरितं हरिद्वर्णं श्लथयोः विरह-तापशिथिलितयोः भुजलतयोः आक्षेपवलनैः विक्षेपकम्पनैः व्यस्तन्यासं परिसी

अपिच,

स्थितमुरसि विशालं पद्मिनीपत्रमेतत्
कथयति न तथान्तर्मन्मथोत्थामवस्थाम्।
अतिशयपरितापग्लापिताङ्ग्या यथास्याः
स्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति॥ (१३)

विदू। [ नाट्येन मृणालिकां गृहीत्वा ] भो वअस्स! अअं क्खु उअअदो अवरो ताए एव्व पीणत्थणहरकिलिसन्त-कोमलमुणालहारो, ता पेक्खदु भवं (१)।

राजा। [ गृहीत्वोरसि विन्यस्य। ] अयि जड़प्रकृते!

परिच्युतस्तत्कुचकुम्भमध्यात्
किं शोषमायासि मृणालहार!।
न सूक्ष्मतन्तोरपि तावकस्य
तत्रावकाशो भवतः कथं स्यात्॥ (१४)

---

(१) भो वयस्य! अयं खलु उपगतोऽपरस्तस्या एव पीनस्तनभरक्लिश्यत्कोमल-मृणालहारः तत् पश्यतु भवान्।

---

निक्षिप्तम् इदं नलिनीपत्रशयनं कमलकुसुमशय्या कृशाङ्ग्याः क्षीणाङ्ग्याः सन्तापं वदति, एतादृशकुसुमशयनदृष्ट्या महान् सन्तापोऽस्या अनुमीयते इत्यर्थः। शिखरिणीवृत्तम्।

(१३) स्थितमिति। उरसि वक्षसि स्थितमर्पितमेतत् विशालं विस्तृतं पद्मिनीपत्रं कमलिनीदलं मन्मथोत्थां कामजनिताम् अन्तरवस्थां तथा न कथयति, अनेन न याथार्थ्यम् अवगम्यते। अतिशयं यथा भवति तथा परितापेन विरह-सन्तापेन ग्लापिताङ्ग्या व्यथितावयवाया अस्या मण्डलाभ्यां चक्राकाराभ्यां यथा यादृशं स्तनयुगयोः परिणाहं विशालतां ब्रवीति अनेन स्फुटमनुमीयत इत्यर्थः। मालिनीवृत्तम्।

(१४) परिच्युत इति। हे जड़प्रकृते! अबोधस्वभाव! मृणालहार! तस्याः कुचौ कुम्भौ इव इत्युपमितिसमासः तयोः मध्यात् अभ्यन्तरात् परिच्युतः पतितः

सुसं। [ आत्मगतम्। ] हद्धी! हद्धी! गुरुआणुराअक्खित्तहिअओ भट्टा असम्बद्धं मन्तिदुं पउत्तो, ता अदो अवरं उण ण जुत्तं अपेक्खिदुं, भोदु एव्वं दाव। [ प्रकाशम्। ] सहि! जस्स किदे तुमं आअदा, सो अअं दे पुरदो चिट्ठदि ( १ )।

साग। [ सासूयम्। ] कस्स किदे अहं आअदा? (२)।

सुसं। [ विहस्य। ] अइ अण्णसङ्किदे! णं चित्तफलअस्स, ता गेण्ह एदं ( ३ )।

साग। [ सरोषम् ] अहं अणिउणा क्खु तुए ईदिसाणं आलावाणं, ता अण्णदो गमिस्सं (४)। [ इति गन्तुमिच्छति। ]

सुसं। अइ असहणे! इह दाव मुहुत्तअं चिट्ठ, जाव इमादो कअलीघरादो चित्तफलअं गेह्निअ आअच्छामि ( ५ )।

साग। सहि! एव्वं करेहि ( ६ )।

[ सुसङ्गता कदलीगृहाभिमुखं परिक्रामति। ]

---

(१) हा धिक्, हा धिक्, गुरुकानुरागाक्षिप्तहृदयो भर्त्ता असम्बद्धं मन्त्रयितुं प्रवृत्तः। तस्मादतोऽपरं पुनर्न युक्तमपेक्षितुं, भवतु एवं तावत्। सखि! यस्य कृते त्वमागता, सोऽयं ते पुरतः तिष्ठति।

(२) कस्य कृते अहमागता?

(३) अयि अन्यशङ्किते! ननु चित्रफलकस्य, तद्गृहाणेतत्।

(४) अहमनिपुणा खलु तवेदृशानामालापानां, तदन्यतो गमिष्यामि।

(५) अयि असहने! इह तावन्मुहूर्त्तं तिष्ठ, यावदस्मात् कदलीगृहाच्चित्रफलकं गृहीत्वा, आगच्छामि।

(६) सखि! एवं कुरु।

---

मम् किं कथं शीघं शुष्कतां आयासि प्राप्नोषि, इदमनौचित्यं ते इत्यर्थः। तावकस्य तव सम्बन्धिनः सूक्ष्मतन्वीः न पुनः स्थूलस्य तव इत्यर्थः। अपि तत्र स्तनद्वयाभ्यन्तरे अवकाशः स्थानं नास्ति, भवतः स्थूलस्य कथं स्यात् तत् तु दुर्घटमेव इत्यर्थः। उपेन्द्रवज्रेन्द्रवज्रयोर्मिलिता उपजातिः वृत्तम्।

विदू। [सुसङ्गतां दृष्ट्वा, ससम्भ्रमम्।] भो वअस्स! पच्छादेहि एदं चित्तफलअं इमिणा कअलीपत्तेण, एसा क्खु देवीए परिचारिआ सुसङ्गदा आअदा (१)।

[राजा पटान्तेन फलकमाच्छादयति।]

सुसं। [उपसृत्य] जअदु, जअदु, भट्टा (२)।

राजा। सुसङ्गते! स्वागतमिहोपविश्यताम्।

[सुसङ्गता उपविशति।]

राजा। सुसङ्गते! कथमिहस्थोऽहं भवत्या ज्ञातः?

सुसं। ण केवलं देवो, चित्तफलएण सह सव्वोवि वुत्तन्तो मए विण्णादो, ता देवीए गदुअ णिवेदइस्सं (३) [इति गन्तुमिच्छति।]

विदू। [अपवार्य्य सभयम्।] भो वअस्स! सव्वं सम्भावीअदि, मुहरा क्खु एसा गब्भदासी, ता परितोसेहि णं। (४)

राजा। युक्तमुक्तं भवता। [सुसङ्गतां हस्ते गृहीत्वा, हस्तादवतार्य्य कटकं, कर्णाभरणं च आत्मन उपनीय, सुसङ्गतायै दत्त्वा।] सुसङ्गते! क्रीड़ामात्रमेतत्, अकारणं त्वया देवी न व्यथयितव्या।

सुसं। पसण्णो मे भट्टा, अलं सङ्काए, एदिणा भट्टिणो

---

(१) भो वयस्य! प्रच्छादय इदं चित्रफलकं अमुना कदलीपत्रेण, एषा खलु देव्याः परिचारिका सुसङ्गता आगता।

(२) जयति जयति भर्त्ता।

(३) न केवलं देवश्चित्रफलकेन सह सर्वो वृत्तान्तोऽपि मया विज्ञातः, तस्माद्देव्यै गत्वा निवेदयिष्यामि।

(४) भो वयस्य! सर्वं सम्भाव्यते, मुखरा खलु एषा गर्भदासी, तस्मात् परितोषय एनाम्।

पसाएण मए कीलिदं एव्व, ता किं कस्माहरणेण? एसो एव्व मे गुरुओ पसाओ, जं कीस तुए एत्थ चित्तफलए अहं आलिहिदेत्ति, कुविदा मे पिअसही साअरिआ चिट्ठदि, ता गदुअ एसा पसादीअदु (१)।

राजा। [ससम्भ्रममुत्थाय।] क्वासौ? दर्शय, दर्शय।

सुसं। एसा कअलीगुम्मान्तरिदा चिट्ठदि (२)।

विदू। भो! गेह्णामि एदं चित्तफलअं, कदावि इमिणा पुणोवि कज्जं होदि (३)।

सुसं। इदो इदो भट्टा। (४) [सर्वे कदलीगृहान्निष्क्रान्ताः।]

साग। [राजानं दृष्ट्वा, सहर्षं ससाध्वसं सकम्पञ्च स्वगतम्।] एणं पेक्खिअ अदिसज्झसेण ण सक्कणोमि पदादो पदंपि गन्तुं, ता किं वा एत्थ करिस्सं? (५)।

विदू। [सागरिकां दृष्ट्वा।] ही ही भो! अच्चरीअं अच्चरीअं, ईदिसं कण्णआरअणं माणुसलोए ण दीसदि, ता तक्केमि पआवइणो वि एदं णिम्माविअ विह्मओ समुप्पण्णो (६)

---

(१) प्रसन्नो मे भर्त्ता, अलं शङ्कया, एतेन भर्त्तुः प्रसादेन मया क्रीडितमेव, तस्मात् किं कर्णाभरणेन? एष एव मे गुरुः प्रसादः, यत्कथं त्वया अत्र चित्रफलकेऽहमालिखितेति कुपिता मे प्रियसखी सागरिका तिष्ठति, तस्मात् गत्वा एषा प्रसाद्यताम्।

(२) एषा कदलीगुल्मान्तरिता तिष्ठति।

(३) भो! गृह्णामि एतत् चित्रफलकं, कदापि अमुना पुनरपि कार्य्यं भवति।

(४) इत इतः भर्त्ता।

(५) एनं प्रेक्ष्य, अतिसाध्वसेन न शक्नोमि पदात् पदमपि गन्तुम्, तत् किं वात्र करिष्यामि?

(६) ही ही भोः आश्चर्य्यमाश्चर्य्यं, ईदृशं कन्यारत्नं मानुषलोके न दृश्यते, तस्मात् तर्कयामि प्रजापतेरपि इदं निर्माय विस्मयः समुत्पन्नः।

राजा । वयस्य ! ममाप्येवं मनसि वर्त्तते ।

दृशः पृथुतरीकृता जितनिजाब्जपत्रत्विषः
चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतम् ।
शिरांसि चलितानि विस्मयवशात् ध्रुवं वेधसो
विधाय ललनां जगत्त्रयललामभूतामिमाम् ॥ (१५)

साग । [ सासूयं सुसङ्गतामालोक्य । ] सहि ! ईदिसो चित्तफलओ तुए आणीदो ( १ ) । [ इति गन्तुमिच्छति । ]

राजा । दृष्टिं रुषा क्षिपसि भामिनि ! यद्यपीमां
स्निग्धेयमेष्यति तथापि न रूक्षभावम् ।
त्यक्त्वा त्वरां, व्रज, पदस्खलितैरयं ते
खेदं गमिष्यति गुरुर्नितरां नितम्बः ॥ ( १६ )

---

(१) सखि ईदृशश्चित्रफलकस्त्वया आनीतः ।

---

(१५) दृश इति । जगत्त्रयस्य त्रिभुवनस्य ललामभूतां आभरणीभूतां इमां ललनां रमणीं विधाय कृत्वा, जिता अवज्ञाता निजस्य अब्जपत्रस्य स्वासनीभूतकमल-दलस्य त्विट् याभिः ता दृशः चक्षुंषि पृथुतरीकृता आदौ चतुर्मुखस्य अष्टानां चक्षुषां पृथुतरत्वं नासीत् पश्चात् आसीत् इति अभूततद्भावे च्विः, चतुर्भिः मुखैः अपि समं युगपत् साधु साध्विति व्याहृतं कथितम् । तथा विस्मयवशात् अभूतपूर्वललनादर्शन-जनितविस्मयात् वेधसो ब्रह्मणश्च, शिरांसि चलितानि कम्पितानि ध्रुवमित्युत्-प्रेक्षायाम् । पृथ्वीवृत्तम् ।

(१६) दृष्टिमिति । हे भामिनि ! कोपने ! प्रिये ! यद्यपि इमां दृष्टिं नेत्रं रुषा कोपेन क्षिपसि मयि पातयसि, तथापि स्निग्धा अकुटिला इयं दृष्टिः न रूक्षभावं पारुष्यं एष्यति, प्रत्युत कमनीयभावमेव एष्यति इति भावः । तेन त्वरां शीघ्रगतिं त्यक्त्वा हित्वा व्रज, शनैः गच्छ इत्यर्थः । अन्यथा शीघ्रगमने हानिरपि अस्ति इति दर्शयन् आह । अयं गुरुः महान् ते तव नितम्बः, पदस्खलितैः स्खलितपदन्यासैः इत्यर्थः । नितरां खेदं व्यथां गमिष्यति, तेन मन्दं मन्दं गच्छेति भावः । वसन्ततिलकम् वृत्तम् ।

ततः प्रविशति वासवदत्ता काञ्चनमाला च।

वास। हञ्जे कंचणमाले! अध केत्तिअदूरे दाणिं अज्ज-उत्तेण परिगहिदा णोमालिआ? (१)

काञ्च। एदं कअलीघरं अदिक्कमिअ दीसदि (२)।

वास। तेण तहिं ज्जेव्व गच्छह्म (३)।

काञ्च। एदु एदु भट्टिणी (४)। [ परिक्रामति। ]

राजा। वयस्य! क्वेदानीं प्रियतमा द्रष्टव्या?

काञ्च। भट्टिणि! जह समीपे भट्टा मन्तेदि, तह तक्केमि भट्टिणीं एव्व पड़िवालअन्तो चिट्ठदि, ता उपसप्पदु भट्टिणी (५)।

वास। [ उपसृत्य। ] जअदु, जअदु, अज्जउत्तो (६)।

राजा। [ अपवार्य्य। ] वयस्य! प्रच्छादय चित्रफलकम्।

[ विदूषकः चित्रफलकम् गृहीत्वा कक्षे निक्षिपति। ]

---

(१) हञ्जे काञ्चनमाले! अथ कियद्दूरे इदानीं आर्य्यपुत्रेण परिगृहीता नवमालिका?

(२) एतत् कदलीगृहमतिक्रम्य दृश्यते।

(३) तेन तत्रैव गच्छामः।

(४) एतु एतु भर्त्री।

(५) भर्त्रि! यथा समीपे भर्त्ता मन्त्रयति, तथा तर्कयामि भर्त्रीमेव परिपालयंस्तिष्ठति, तस्मादुपसर्पतु भर्त्री।

(६) जयति जयति आर्य्यपुत्रः।

---

अनुरागस्य यस्याः, कान्ता मनोहरा, रत्नावली हारयष्टिः तदाख्या कान्ता प्रिया मम कस्मात् भवता भ्रंशिता स्खलनं कारिता एतदेव तव मूर्खत्वम् इत्यर्थः। आर्य्याछन्दः।

वास। अज्जउत्त! कुसुमिदा णोमालिआ ?। (१)

राजा। [सविस्मयम्।] देवि! प्रथममागतैरस्माभिस्त्वं चिरयसीति कृत्वा न दृष्टा, तदेहि, समेतावेव तां पश्यावः।

वास। [निर्वर्ण्य।] अज्जउत्तमुहाणुरागादो एव्व मए जाणिदं जहा कुसुमिदा णोमालिआत्ति, ता ण गमिस्सं (२)।

विदू। भोदि, जइ एव्वं, ता जिदं अम्भेहिं (३)। [इति बाहू प्रसार्य्य नृत्यति, कक्षात् पतितं फलकं दृष्ट्वा विषादं नाटयति।]

[राजा अपवार्य्य अङ्गुल्या दर्शयन् वसन्तकमुखं पश्यति।]

विदू। [अपवार्य्य।] भो! भो! मा कुप्प, अहं ज्जेव्व पच्छादइस्सं (४)।

काञ्च। [फलकं गृहीत्वा।] भट्टिणि! पेक्ख दाव, किं एत्थ चित्तफलए आलिहिदं ? (५)।

वास। [निर्वर्ण्य स्वगतम्।] अअं अज्जउत्तो, इअं उण साअरिआ [प्रकाशं राजानं प्रति।] अज्जउत्त! किं एदं (६)।

राजा। [सवैलक्ष्यस्मितं अपवार्य्य।] वयस्य! किं ब्रवीमि ?

विदू। [अपवार्य्य।] भो! मा चिन्तेहि, अहं उत्तरं दाइस्सं [प्रकाशं वासवदत्तां प्रति।] भोदि, मा अण्णधा

---

(१) आर्य्यपुत्र! कुसुमिता नवमालिका।

(२) आर्य्यपुत्रमुखानुरागादेव मया ज्ञातं यथा कुसुमिता नवमालिकेति, तत् न गमिष्यामि।

(३) भवति! यद्येवं, तदा जितमस्माभिः।

(४) भो! भो! मा कुप्य, अहमेव प्रच्छादयिष्यामि।

(५) भर्त्रि! पश्य तावत्, किमत्र चित्रफलके आलिखितम् ?

(६) अयमार्य्यपुत्रः, इयं पुनः सागरिका। आर्य्यपुत्र! किमेतत् ?

सुसं। भट्टा! अदिकोपणा क्खु एसा, ता अग्गहत्थेण गेण्हिअ पसादेहि णं (१)।

राजा। [सानन्दम्।] यथाह भवती। [सागरिकां हस्ते गृहीत्वा स्पर्शसुखं नाटयति।]

विदू। भो! एसा क्खु तुए अपुव्वा सिरी समासादिदा (२)

राजा। वयस्य! सत्यम्।

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः।
कुतोऽन्यथा स्रवत्येव स्वेदच्छद्मामृतद्रवः॥ (१७)

सुसं। सहि! अदक्खिणासि तुमं दाणिं, जा एव्वं भट्टिणा हत्थेण गहिदावि कोवं न मुञ्चेसि (३)।

साग। [सभ्रूभङ्गम्।] अइ सुसङ्गदे! अज्जवि ण विरमेसि? (४)

राजा। अयि! न खलु सखीजने युक्तमेव कोपानुबन्धं कर्त्तुम्।

---

(१) भर्त्तः! अतिकोपना खलु एषा, तस्मादग्रहस्तेन गृहीत्वा प्रसादयैनाम्।

(२) भो! एषा खलु त्वया अपूर्वा श्रीः समासादिता।

(३) सखि! अदक्षिणा असि त्वं इदानीम्, या एवं भर्त्रा हस्तेन गृहीतापि कोपं न मुञ्चसि।

(४) अयि सुसङ्गते! अद्यापि न विरमसि?

---

(१७) श्रीरेषेति। एषा श्रीः लक्ष्मीः, अस्याः पाणिः हस्तोऽपि पारिजातस्य तदाख्यवृक्षस्य पल्लवः, उभयोरपि समुद्रजातत्वादिति भावः। अन्यथा शीतपारिजातपल्लवत्वास्वीकारे स्वेदएव छद्म छलं यस्य स अयमेषोऽमृतद्रवः सुधाचरणं कुतो हेतोः स्रवति, अत्र त्रयाणामपि पदार्थानां समुद्रजातत्वात् तथात्वमुत्प्रेक्षितमिति भावः। अनुष्टुप् वृत्तम्।

विदू। भोदि! बुभुक्खिदो बम्हणो विअ किं कुप्पसि (१)?

साग। सहि! तुए सह ण बोलइस्सं (२)।

राजा। अयि कोपने! नैतद्युक्तं समानप्रतिपत्तिषु सखीषु।

विदू। भो! एसा क्खु अवरा देवी वासवदत्ता (३)।

[राजा सचकितं सागरिकाया हस्तं मुञ्चति।]

साग। सुसङ्गदे! किं दाणिं एत्थ करिस्सं (४)।

सुसं। सहि! एदं तमालविडपं अन्तरीअ इदो णिक्कमम्ह (५)। [इति निष्क्रान्ते।]

राजा। [पार्श्वतोऽवलोक्य सविस्मयम्।] क्वासौ देवी वासवदत्ता?

विदू। भो! मा णं एदं, मए एसा क्खु अवरा देवी वासवदत्ता अदिदीहरोसदएत्ति भणिदं (६)।

राजा। धिङ्मूर्ख!

प्राप्ता कथमपि दैवात् कण्ठमनीतेव सा प्रकटरागा।
रत्नावलीव कान्ता मम हस्तात् भ्रंशिता भवता॥ (१८)

(१) भवति! बुभुक्षितो ब्राह्मण इव किं कुप्यसि?

(२) सखि! त्वया सह न वक्ष्यामि।

(३) भो! एषा खलु अपरा देवी वासवदत्ता।

(४) सुसङ्गते! किमिदानीं अत्र करिष्यामि?

(५) सखि! इदं तमालविटपमन्तरयित्वा इतो निष्क्रामामः।

(६) भो! मा ननु एतत्, मया एषा खलु अपरा देवी वासवदत्ता अतिदीर्घरोषतयेति भणितम्।

(१८) प्राप्तेति। कथमपि अतिकष्टेन दैवात् दैववलात् प्राप्ता, कण्ठं कण्ठदेशं, कण्ठालिङ्गनञ्च अनीतैव अप्रापितैव, सा प्रकटः स्फुटो रागो वर्णोत्कर्षः

सम्भावेहि, अप्पा किल दुक्खेण आलिहीअदित्ति मम वअणं सुणिअ पिअवअस्सेण एदं आलेक्खविण्णाणं दंसिदं (१) ।

राजा । यथाह वसन्तकस्तथैवैतत् ।

वास । [ फलकं निर्दिश्य । ] अज्जउत्त ! एसावि जा अवरा तुह समीवे आलिहिदा ता किं अज्जवसन्तअस्स विण्णाणं (२) ।

राजा । [ सवैलक्ष्यस्मितम् । ] अलमन्यथा शङ्कया, इयं हि स्वचेतसैव परिकल्प्य लिखिता, न तु दृष्टपूर्वा ।

विदू । सच्चं सवामि बह्मसुत्तेण, जइ कदावि अम्हेहिं ईदिसी दिट्ठपूर्वा (३) ।

काञ्च । [ अपवार्य्य । ] भट्टिणि ! कदावि ईदिसं उण घुणक्खरं सम्वददि ज्जेव्व, ता अलं कोवेण (४) ।

वास । [ अपवार्य्य । ] अइ उज्जुए ! एदस्स वक्कभणिदाइं ण आणासि, वसन्तओ क्खु एसो । [ प्रकाश्य राजानं प्रति । ] अज्जउत्त ! मम उण एदं चित्तं पेक्खन्तीए सीसवेअणा समुप्पण्णा, ता सुहं चिट्ठदु अज्जउत्तो ! अहं गमिस्सं (५) । [ इत्युत्थाय गच्छति । ]

---

(१) भीः ! मा चिन्तय, अहमुत्तरं दास्यामि । भवति ! मा अन्यथा सम्भावय, आत्मा किल दुःखेन आलिख्यते इति मम वचनं श्रुत्वा प्रियवयस्येन इदम् आलेख्य-विज्ञानं दर्शितम् ।

(२) आर्य्यपुत्र ! एषापि या अपरा तव समीपे आलिखिता, तत् किमार्य्य-वसन्तकस्य विज्ञातम् ।

(३) सत्यं शपे ब्रह्मसूत्रेण, यदि कदापि अस्माभिरीदृशी दृष्टपूर्वा ।

(४) भर्त्रि ! कदापि ईदृशं पुनर्घुणाक्षरं संवदत्येव तदलं कोपेन ।

(५) अयि ऋजुके ! एतस्य वक्रभणितानि न जानासि, वसन्तकः खल्वेषः ।

[ राजा पटान्तेन गृहीत्वा। ] देवि !

प्रसीदेति ब्रूयामिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः।
न मे दोषोऽस्तीति, त्वमिदमपि च ज्ञास्यसि मृषा
किमेतस्मिन् वक्तुं क्षममिति न वेद्मि प्रियतमे !॥ (१८)

वास। [ सविनयं पटान्तमाकर्षन्ती। ] अज्जउत्त ! मा अरुधा सम्भावेहि, सच्चं एव्व मं सीसवेअणा बाधेदि, ता गमिस्सं (१)। [ इति निष्क्रान्ते। ]

विदू। भो ! दिट्ठिआ वड्ढसे, क्खेमेण अदिक्कन्ता एसा वासवदत्ता, अआलवादलिआ (२)।

राजा। धिङ्मूर्ख ! अलं परितोषेण, यान्या निगूढो न लक्षितस्त्वया देव्याः कोपानुबन्धः ? पश्य।

---

आर्य्यपुत्र ! मम पुनरिदं चित्रं पश्यन्त्याः शीर्षवेदना समुत्पन्ना, तत् सुखं तिष्ठतु आर्य्यपुत्रोऽहं गमिष्यामि !

(१) आर्य्यपुत्र ! मा अन्यथा सम्भावय, सत्यमेव मां शीर्षवेदना बाधते, तद्गमिष्यामि।

(२) भो ! दिष्ट्या वर्द्धसे, क्षेमेण अतिक्रान्ता एषा वासवदत्ता, अकालवादलिका।

---

(१८) प्रसीदेतीति। त्वं प्रसीद प्रसन्ना भव इति ब्रूयां वक्तुं शक्नुयां किन्त्विदं वचनं कोपे असति सति न घटते न युज्यते, पुनरेवं कार्य्यमित्यर्थात् न करिष्यामि इति चेत्, तदा अभ्युपगमः स्वदोषस्वीकारो भवेत्। मे मम दोषो नास्ति इति चेत् इदमपि एतद्वचनमपि त्वं मृषा मिथ्या ज्ञास्यसि च, न पुनर्विश्वासं करिष्यसि इत्यर्थः। हे प्रियतमे ! एतस्मिन् विषये किं वक्तुं क्षमं युक्तं भवेत् इति न अहं वेद्मि जानामि। शिखरिणीवृत्तम्।

भ्रूभङ्गे सहसोद्गतेऽपि, वदनं नीतं परां नम्रताम्
ईषन्मां प्रति भेदकारि हसितं, नोक्तं वचो निष्ठुरम्
अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं,
कोपस्य प्रकटीकृतो दयितया, मुक्तश्च न प्रश्रयः॥ (२०)

तदेहि देवीं प्रसादयितुमभ्यन्तरमेव प्रविशावः।

इति निष्क्रान्तौ।

इति कदलीगृहं नाम द्वितीयोऽङ्कः।

---

## अथ तृतीयोऽङ्कः।

ततः प्रविशति मदनिका।

मद। [आकाशे] कोसम्बिए! अवि दिट्ठा तुए भट्टिणीसआसे कञ्चणमाला ण वेत्ति। [आकर्ण्य।] किं भणासि, कोवि कालो ताए आअच्छिअ गदाएत्ति, ता कहिं दाणिं पेक्खिस्सं। [अग्रतोऽवलोक्य।] कहं एसा क्खु कञ्चणमाला इदो ज्जेव्व आअच्छदि, ता जाव णं उपसप्पामि (१)।

(१) कौशाम्बिके! अपि दृष्टा त्वया भर्त्तृसकाशे काञ्चनमाला न वेति।

(२०) भ्रूभङ्ग इति। भ्रूभङ्गे भ्रूकौटिल्ये सहसा उद्गते उदितेऽपि वदनं मुखं परामधिकां नम्रतां नीतं प्रापितं, नतमुखत्वं नीतमित्यर्थः। मां प्रति ईषत् अल्पं भेदकारि विभिन्नं हसितं, हसितमिति भावे क्तः। निष्ठुरं कठिनं वचो न उक्तम्। अन्तरभ्यन्तरे बाष्पेण नेत्रजलेन जडीकृतं निश्चलीकृतं स्थिरमित्यर्थः, चक्षुः प्रभुतया बाहुल्येन न विस्फारितं विस्तारितम्। कोपस्य प्रकटीकृतः प्रकाशितः, प्रश्रयः विश्वासो विनयो वा, न मुक्तश्च, अत्र सर्वत्र दयितयेति कर्तृपदेनान्वयः। शार्दूलविक्रीडितम् वृत्तम्।

ततः प्रविशति काञ्चनमाला ।

काञ्च । [सोच्छ्वासम् ।] साहु रे वसन्तअ ! साहु, अदिसइदो तुए अमच्चजौअन्धराअणो इमाए सन्धिविग्गहचिन्ताए (१) ।

मद । [सस्मितमुपसृत्य ।] हला काञ्चनमाले ! किं अज्ज वसन्तएण किदं, जेण सो एव्वं सलाहीअदि (२) ।

काञ्च । हला मअणिए ! किं तव एदिणा पुच्छिदेण पओअणं, तुमं इमं रहस्सं रक्खिदुं ण पारेसि (३) ।

मद । सवामि देवीए चरणेहिं, जइ कस्सवि पुरदो पआसेमि (४) ।

काञ्च । जइ एव्वं ता सुणु, अज्ज क्खु मए राअकुलादो पडिणिवत्तमाणाए चित्तसालिआदुवारे वसन्तअस्स सुसङ्गदाए समं आलावो सुदो (५) ।

मद । [सकौतुकम् ।] सहि ! कीदिसो सो आलावो ?(६) ।

---

किं भणसि, कोऽपि कालस्तया आगत्य गताया इति, तत् कुत्र इदानीं द्रक्ष्यामि। कथमेषा खलु काञ्चनमाला इत एवागच्छति, तद्यावदेनामुपसर्पामि ।

(१) साधु रे वसन्तक ! साधु, अतिशयितस्त्वया अमात्ययौगन्धरायणः अनया सन्धिविग्रहचिन्तया ।

(२) हला काञ्चनमाले ! किमद्य वसन्तकेन कृतं, येन स एवं श्लाघ्यते ।

(३) हला मदनिके ! किं तवैतेन पृष्टेन प्रयोजनम्, त्वमिदं रहस्यं रक्षितुं न पारयसि ।

(४) शपे देव्याश्चरणैः, यदि कस्यापि पुरतः प्रकाशयामि ।

(५) यद्येवं, तत् शृणु, अद्य खलु मया राजकुलात् प्रतिनिवर्त्तमानया चित्रशालिकाद्वारे वसन्तकस्य सुसङ्गतया समं आलापः श्रुतः ।

(६) सखि ! कीदृशः स आलापः ?

काञ्च। एव्वं वसन्तएण भणिदं, जह, सुसङ्गदे! णहि साअरिअं वज्जिअ पिअवअस्सस्स अण्णं किम्पि असुत्थदाए कारणं, ता एत्थ पडिआरं चिन्तेहि (१)।

मद। तदा सुसङ्गदाए किं भणिदं? (२)।

काञ्च। तदो ताए एव्वं भणिदं, अज्ज क्खु देवीए चित्तफलअवुत्तन्तसङ्किदाए साअरिअं परिरक्खिदुं मम हत्थे समप्पअन्तीए जं णेवत्थं मे पसादीकिदं, तेण ज्जेव्व विरइदभट्टिणीवेसं साअरिअं गेण्हिअ, अहम्पि कञ्चनमालावेसधारिणी भविअ पदोसे सआसं भट्टिणो आगमिस्सं? तुमं पि इहट्ठिदो ज्जेव्वं पडिवालइस्ससि, तदो माहवीलदामण्डवे ताए सह भट्टिणो सङ्गमो हुविस्सदि (३)।

मद। सुसङ्गदे! हदासा क्खु तुमं, जा एव्वं परिअणवच्छलां देवीं वञ्चेसि (४)।

काञ्च। हला! दाणिं तुमं कहिं पत्थिदा? (५)

मद। अस्सुत्थसरीरस्स भट्टिणो कुसलवुत्तन्तं जाणिदुं

---

(१) एवं वसन्तकेन भणितम्, यथा, सुसङ्गते! नहि सागरिकां वर्जयित्वा प्रियवयस्यस्यान्यत् किमपि अस्वस्थतायाः कारणम्, तदत्र प्रतीकारं चिन्तय।

(२) तदा सुसङ्गतया किं भणितम्।

(३) ततः तयैवं भणितम्, अद्य खलु देव्या चित्रफलकवृत्तान्तशङ्कितया सागरिकां परिरक्षितुं मम हस्ते समर्पयन्त्या यन्नेपथ्यं मे प्रसादीकृतम्, तेनैव विरचितभर्त्रीवेशां सागरिकां गृहीत्वा, अहमपि काञ्चनमालावेशधारिणी भूत्वा प्रदोषे सकाशं भर्तुरागमिष्यामि, त्वमपि इह स्थिता एवं प्रतिपालयिष्यसि, ततो माधवीलतामण्डपे तया सह भर्तुः समागमो भविष्यति।

(४) सुसङ्गते! हताशा खलु त्वं, या एवं परिजनवत्सलां देवीं वञ्चयसि।

(५) अयि! इदानीं त्वं कुत्र प्रस्थिता?

गदा तुमं चिरयसि त्ति, उत्तम्मन्तीए देवीए तुह सआसं पेसिदम्हि (१)।

काञ्च। अदिउज्जुआ सा देवी, जा एव्वं पत्तिआअदि। [परिक्रम्यावलोक्य च।] कहं एत्थ एसो क्खु भट्टा अस्सत्थदामिसेण अत्तणो मअणावत्थं पच्छादअन्तो दन्ततोरणवलहीए उवरि उवविट्ठो चिट्ठदि, ता एहि, एदं वुत्तन्तं भट्टिणीए णिवेदेम्ह (२)। [इति निष्क्रान्ते प्रवेशकः।]।

ततः प्रविशति मदनावस्थां नाटयन्नुपविष्टो राजा।

[राजा। सोत्कण्ठं निश्वस्य।]

सन्तापो हृदय! स्मरानलकृतः सम्प्रत्ययं सह्यताम्
नास्त्येवोपशमोऽस्य तां प्रति पुनः किं त्वं मुधा ताम्यसि।
यन्मूढ़ेन मया तदा कथमपि प्राप्तो गृहीत्वा चिरम
विन्यस्तस्त्वयि सान्द्रचन्दनरसस्पर्शो न तस्याः करः॥ (१)

---

(१) अस्वस्थशरीरस्य भर्त्तुः कुशलवृत्तान्तं ज्ञातुं गता त्वं चिरयसीति उत्ताम्यन्त्या देव्या तव सकाशं प्रेषितास्मि।

(२) अतिऋजुका सा देवी, या एवं प्रत्याय्यते। कथमत्र एष खलु भर्त्ता अस्वस्थतामिषेण आत्मनो मदनावस्थां प्रच्छादयन् दन्ततोरणवलभ्या उपरि उपविष्टस्तिष्ठति, तदेहि अमुं वृत्तान्तं भर्त्र्यै निवेदयावः।

---

(१) सन्ताप इति। हे हृदय! स्मर एवानलः तेन कृतो जनितोऽयं सन्तापो वेदना सम्प्रति सह्यतां, उपायान्तराभावादित्यर्थः। अस्य सन्तापस्य उपशमो विनाशो नास्त्येव, तां सागरिकां प्रति पुनः किं किमर्थं त्वं मुधा वृथा ताम्यसि तापं भजसे, तदपि वृथेत्यर्थः। वृथात्वं दर्शयति,—"यदिति। यत् यस्मात् तदा सागरिकाप्राप्तिकाले मूढ़ेन अज्ञेन मया कथमपि अतिकष्टेन प्राप्तो लब्धश्चिरं चिरकालं गृहीत्वा सान्द्रचन्दनरसस्पर्शः, घनमलयजरसतुल्यशीतलस्पर्शः, तस्याः करः त्वयि

अहो! महदाश्चर्य्यम्। तथाहि

मनश्चलं प्रकृत्यैव दुर्लक्ष्यञ्च तथापि मे।
कामेनैतत् कथं विद्धं समं सर्वैः शिलीमुखैः॥ (२)

[अङ्गमवलोक्य।] भोः कुसुमधन्वन्!।

बाणाः पञ्च मनोभवस्य नियतास्तेषामसंख्यो जनः
प्रायोऽस्मद्विध एव लक्ष्य इति यल्लोके प्रसिद्धिं गतम्।
दृष्टं तत्त्वयि विप्रतीपमधुना यस्मादसङ्ख्यैरयम्
विद्धः कामिजनः शरैरशरणो नीतस्त्वया पञ्चताम्॥ (३)

[विचिन्त्य।] तथा अहमेवंविधावस्थम् आत्मानं न अनुचिन्तयामि, यथा अन्तर्गूढ़कोपसम्भाराया देव्या लोचनगोचरगतां तामेव तपस्विनीं सागरिकाम्। तथाहि,

---

हृदये न विन्यस्तः समर्पितः, तेनैव इयाल्मतत्तद्विरहकाले तवापि तापसहनमुचितमित्यर्थः। शार्दूलविक्रीड़ितम् वृत्तम्।

(२) मन इति। प्रकृत्या स्वभावेन एव मनश्चलं चञ्चलं रजोगुणाधिक्यात् चलत्वं मनस इति साङ्ख्यनयः। तथापि चञ्चलत्वेऽपि मे मम दुर्लक्ष्यं अन्यैः लक्षितुम् अशक्यमिति यावत्। एतत् मनः सर्वैः पञ्चभिः शिलीमुखैः बाणैः समं सह कथं केन प्रकारेण विद्धं तत् न वेद्मि इति भावः। अनुष्टुप् वृत्तम्।

(३) बाणा इति। मनोभवस्य मनसिजस्य कामस्य बाणाः शराः पञ्च पञ्चसंख्यकाः, कामस्य पञ्चशरत्वादिति भावः। नियता निश्चिताः, अस्माकं विधेव विधा यस्य स अस्मत्समानः असङ्ख्यः सङ्ख्यारहितो जनः प्रायो बाहुल्येन तेषां शराणां लक्ष्यः इति यत् लोके जगति प्रसिद्धिं गतं प्रसिद्धमस्ति इति यावत्, तत् अधुना त्वयि पञ्चशरे इत्यर्थः, विप्रतीपं विरुद्धं दृष्टं, यस्मात् त्वया असङ्ख्यैः सङ्ख्यातीतैः शरैः अशरणः आश्रयहीनः अयं कामिजनः विद्धः सन् पञ्चतां पञ्चसङ्ख्यातां तथा पञ्चतां जीवितावसानं नीतं, एतदेव ते विरुद्धाचरणं तेन विरोधाभासोऽलङ्कारः, असङ्ख्यैः पञ्चतामिति विरोधः, तत्परिहारस्तु पञ्चतां मृत्युमिति। शार्दूलविक्रीड़ितम् वृत्तम्।

ह्रिया सर्वस्याग्रे नयति विदिताऽस्मीति वदनम्
द्वयोर्दृष्ट्वालापं कलयति कथामात्मविषयाम्।
सखीषु स्मेरासु प्रकटयति वैलक्ष्यमधिकम्
प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरा॥ (४)

प्रेषितश्च मया तद्वार्त्तान्वेषणाय कथं चिरयति वसन्तकः।

[ततः प्रविशति हृष्टो वसन्तकः।]

वस। [सपरितोषम्।] ही ही भोः! कोसम्बीरज्ज-लाहेणावि ण तादिसो पिअवअस्सस्स हिअअपरितोसो आसीत्, जादिसो मम सआसादो अज्ज पिअवअणं सुणिअ हुविस्सदित्ति तक्केमि, ता जाव गदुअ पिअवअस्सस्स णिवेदइस्सं [परिक्रम्यावलोक्य च।] कधं, एसो पिअवअस्सो जह इमं ज्जेव्व दिसं अवलोअन्तो चिट्ठदि, तह तक्केमि मं ज्जेव्व पडिवालेदि, ता जाव णं उपसप्पामि। [इत्युपसृत्य।] जअदु जअदु पिअवअस्सो। भो वअस्स! दिट्ठिआ वड्ढसे तुमं समीहिदकज्जसिद्धीए (१)।

---

(१) ही ही भोः! कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य हृदयपरितोष आसीत्, यादृशो मम सकाशात् अद्य प्रियवचनं श्रुत्वा भविष्यति इति तर्कयामि, तत् यावत् गत्वा प्रियवयस्यस्य निवेदयामि, कथमेष प्रियवयस्यो यथा इमामेव दिशमवलोकयंस्तिष्ठति, तथा तर्कयामि मामेव प्रतिपालयति, तद्यावदेनमुपसर्पामि। जयति जयति प्रियवयस्यः। भो वयस्य! दिष्ट्या वर्द्धसे त्वं समीहितकार्य्यसिद्ध्या।

(४) ह्रियेति। विदिता परैः ज्ञाताऽस्मीति हेतोः ह्रिया लज्जया सर्वस्य अग्रे पुरतो वदनं नयति लज्जावनतं मुखं करोति इत्यर्थः। द्वयोः उभयोः आलापं परस्परविस्रम्भवाक्यं दृष्ट्वा आत्मविषयां स्वसंक्रान्तां कथां कलयति, एतौ मद्विषयं इति मनसि विवेचयति इत्यर्थः। सखीषु वयस्यासु स्मेरासु हास्यमुखीषु सतीषु अधिकं वैलक्ष्यं लज्जां प्रकटयति, प्रकाशयति, अनेन कारणेन मम प्रिया सागरिका प्रायेण

राजा। [सहर्षम्।] वयस्य! अपि कुशलं प्रियायाः सागरिकायाः।

विदू। [सगर्वम्।] भो! अइरेण सअं एव्व पेक्खिअ जाणिस्ससि (१)।

राजा। [सपरितोषम्।] वयस्य! दर्शनमपि भविष्यति प्रियायाः?।

विदू। [साहङ्कारम्।] भोः! कीस ण भविस्सदि, जस्स दे उवहसिदविहप्पदिबुद्धिविहवो अहं अमच्चो (२)।

राजा। [विहस्य।] न खलु चित्रम्, किं न सम्भाव्यते त्वयि? तत्कथय, विस्तरतः श्रोतुमिच्छामि।

विदू। [कर्णे एवमेवं कथयति।]

राजा। [सपरितोषम्।] वयस्य! इदं ते पारितोषिकम्। [इति हस्तादवतार्य्य कटकं ददाति।]

विदू। [कटकं परिधाय आत्मानं निर्वर्ण्य सपरितोषम्।] भोदु एव्वं दाव, समुद्दसुद्धसोवखकडुअमण्डिअहत्थं अत्तणो बह्मणीए गदुअ दंसइस्सं (३)

(१) भो! अचिरेण स्वयमेव प्रेक्ष्य ज्ञास्यसि।

(२) भोः! कथं न भविष्यति, यस्य ते उपहसितबृहस्पतिबुद्धिविभवोऽहममात्यः।

(३) भवतु एवं तावत्, समुद्रशुद्धसौवर्णकटकमण्डितहस्तं आत्मनो ब्राह्मण्यै गत्वा दर्शयिष्यामि।

मूष्मा हृदयनिहितेन हृदिस्थेन आतङ्केन भयेन विधुरा व्याकुला आसे सर्वथा लज्जया आधिम्याधिम् अनुभवति इत्यर्थः। शिखरिणी वृत्तम्।

राजा। सखे! पश्चात् दर्शयिष्यसि, श्रूयतां तावत् किम् अवशिष्टमङ्क इति।

विदू। [परिक्रम्यावलोक्य च सहर्षम्।] भो! पेक्ख पेक्ख, एसो क्खु गुरुआणुराअक्खित्तहिअओ, सञ्झावहूदिस-सङ्केओ विअ, अत्थगिरिसिहरकाणणमणुसरदि भअवं सहस्सरस्सी (१)।

राजा। [विलोक्य सहर्षम्।] सखे! सम्यगुपलक्षितम्, पर्य्यवसितमहः। तथाहि,

अध्वानं नैकचक्रः प्रभवति भुवनभ्रान्तिदीर्घं विलङ्घ्य
प्रातः प्राप्तुं रथो मे पुनरिति मनसि न्यस्तचिन्तातिभारः।
सन्ध्याकृष्टावशिष्टस्वकरपरिकरैः स्पृष्टहेमारपङ्क्तिं
व्याकृष्यावस्थितोऽस्तक्षितिभृति नयतीवैष दिक्चक्रमर्कः॥ ५

---

(१) भोः! प्रेक्षस्व प्रेक्षस्व. एष खलु गुरुकानुरागक्षिप्तहृदयः, सन्ध्यावधूदत्तसङ्केत इव अस्तगिरिशिखरकाननमनुसरति भगवान् सहस्ररश्मिः।

---

(५) अध्वानमिति। एकं चक्रं यस्य असौ एकचक्रो मे मम रथः, सूर्य्यरथस्य एकचक्रत्वं प्रसिद्धम्। भुवनभ्रान्त्या विश्वभ्रमणेन दीर्घम् अतिमहान्तमध्वानं पन्थानं विलङ्घ्य अतिक्रम्य पुनरपि प्रातः प्रातःकाले प्राप्तुं निर्दिष्टस्थानं गन्तुं न प्रभवति पूर्वरात्रौ बहुपथगमनात् पुनः प्रातर्गन्तुमशक्तत्वमित्यर्थः। इति हेतोः मनसि अन्तःकरणे न्यस्तः अर्पितश्चिन्ताया अतिभारः आतिशय्यं येन स अस्तक्षितिभृति अस्ताचले अवस्थितोऽस्ताचलमवलम्बमान एष परिदृश्यमानोऽर्कः सूर्य्यः सन्ध्यया आकृष्टेभ्यः किरणेभ्योऽवशिष्टानां स्वकराणां स्वमयूखानां परिकरैः समूहैः स्पृष्टा उपमिता तत्तुल्येत्यर्थः, हेमारपङ्क्तिः हेमवत्प्रतीयमाना अरपङ्क्तिररपुष्पराजिः यस्य तत् दिक्चक्रं व्याकृष्य गृहीत्वा नयति इत्युत्प्रेक्षा। स्रग्धरा वृत्तम्।

अपिच,

यातोऽस्मि पद्मवदने ! समयो ममैष
सुप्ता मयैव भवती प्रतिबोधनीया।
प्रत्यायनामयमितीव सरोरुहिण्याः
सूर्य्योऽस्तमस्तकनिविष्टकरः करोति॥ (६)

तदुत्तिष्ठ तत्र एव माधवीलतामण्डपे गत्वा, प्रियतमा-सङ्केतावसरं प्रतिपालयावः।

विदू। सोहणं भणिदं। [इत्युत्तिष्ठति। विलोक्य।] भो वअस्स ! पेक्ख पेक्ख, एसो क्खु बहलीकिदबिरलबणराइ-सण्णिवेसो, गहीदघणपङ्कपीबरवणबराहमहिसकसणसारच्छवी, पसरदि पुब्वदिसं पच्छादअन्तो तिमिरसङ्घाओ (१)।

---

(१) शोभनं भणितम्। भोः वयस्य ! पश्य पश्य, एष खलु बहलीकृतविरल-वनराजिसन्निवेशो, गृहीतघनपङ्कपीवरवनवराहमहिषकृष्णसारच्छविः प्रसरति पूर्वदिशं प्रच्छादयंस्तिमिरसङ्घातः।

---

(६) यात इति। पद्ममिव वदनं यस्याः, तत्सम्बुद्धिः। हे पद्मवदने ! पद्मिनि ! अहं यातोऽस्मि गन्तुमुद्युक्तो भवामि इत्यर्थः। यतः एष मम समयो गन्तुमित्यर्थः। विधातुः नियोगमुल्लङ्घ्य कथङ्कारमत्र अवस्थानं मम सम्भवति इति भावः। सुप्ता मुद्रिता निद्रिता च भवती मयैव नान्येन प्रतिबोधनीया, तव निद्राभङ्गः कार्य्यः, अहमद्य तु यामि कल्यमुषसि एव आगमिष्यामि तदा तु तवापि न निद्राभङ्गो भविष्यति इति च ध्वन्यते। अस्तमस्तके अस्ताचलचूडायां निविष्टाः कराः किरणाः हस्तौ च यस्य सोऽयं सूर्य्य इति इव इत्थमेव सरोरुहिण्याः पद्मिन्याः स्वप्रेयस्याश्च प्रत्यायनामाश्वासं करोति जनयति। अत्र श्लेषोपमोत्प्रेक्षाणां सङ्करः। वसन्ततिलकं वृत्तम्।

राजा। [सहर्षं समन्ताद्विलोक्य।] वयस्य! सम्यक् दृष्टम्। तथाहि,

पुरः पूर्वामेव स्थगयति ततोऽन्यामपि दिशम्
क्रमात् क्रामन्नद्रिद्रुमपुरविभागांस्तिरयति।
उपेतः पीनत्वं तदनु भुवनस्येक्षणपथम्
तमःसङ्घातोऽयं हरति हरकण्ठद्युतिहरः ॥ (७)

तदादेशय मार्गम्।

विदू। एदु एदु पिअवअस्सो। [इति परिक्रामतः।] [निरूप्य।] भो वअस्स! एदं क्खु समासण्णं बहलपादवदाए पिण्डीकिदान्धआरं विअ मअरन्दुज्जाणं, ता कधं एत्थ मग्गो लक्खीअदि (१)।

राजा। [गन्धमाघ्राय।] वयस्य! गच्छ अग्रतः, ननु सुपरिज्ञात एव अत्र मार्गः। तथाहि,

---

(१) एतु एतु प्रियवयस्यः। भो वयस्य! एतत् खलु समासन्नं बहलपादपतया पिण्डीकृतान्धकारमिव मकरन्दोद्यानम्, तत् कथमत्र मार्गो लक्ष्यते।

---

(७) पुर इति। पुरः प्रथमं पूर्वामेव दिशं स्थगयति आदौ तत्रैव औचित्यादिति। ततोऽन्यां उत्तरदक्षिणादिकामपि दिशं स्थगयति, क्रमात् क्रामन् अग्रेसरो भूत्वा अद्रिद्रुमपुरविभागान् नगवृक्षनगरप्रदेशान् तिरयति आच्छादयति इत्यर्थः। तदनु तदनन्तरं पीनत्वं स्थौल्यं गाढतामित्यर्थः, उपेतः प्राप्तः अयं हरकण्ठस्य नीलकण्ठ-कण्ठस्य द्युतिं कान्तिं हरति इति हरः पचाद्यच्, तद्वद्गाढनील इत्यर्थः, तमःसङ्घातः तमोवृन्दं भुवनस्य लक्षणया तद्वर्त्तिमानवसमूहस्य ईक्षणपथं नयनगोचरं हरति अनेकस्य तमसो गिरिगुहाद्यनेकविषयपदार्थाच्छादनात् सम्बन्धोक्तिः अतिशयोक्तिः, साच उपमया संकीर्य्यते। शिखरिणी वृत्तम्।

पालीयं चम्पकानां नियतमयमसौ सुन्दरः सिन्धुवारः
सान्द्रा वीथी तथैवं बकुलविटपिनां पाटला पङ्क्तिरेषा ।
आघ्रायाघ्राय गन्धं विविधमधिगतैः पादपैरेवमस्मिन्
व्यक्तिं पन्थाः प्रयाति द्विगुणतरतमो निह्नुतोऽप्येष चिह्नैः ॥ ८

इति परिक्रामतः ।

विदू । भो ! एदं क्खु, निपडन्त-मत्तमहुअर-बउलकुसुमामोदवासिददसदिसामुहं मसिणमरअदमणिसिलाकुट्टिम-सुहाअन्तचरणसञ्चारसूइदं, तं ज्जेव्व माहवीलदामण्डवं संपत्तम्ह, ता इह ज्जेव्व चिट्ठदु भवं, जाव अहं देवीवेसधारिणीं साअरिआं गेण्हिअ लहु आअच्छामि (१) ।

राजा । वयस्य ! तेन हि त्वर्य्यताम् ।

---

(१) भो ! एतत् खलु निपतन्मत्त-मधुकरवकुलकुसुमामोद-वासित-दशदिशामुखं मसृणमरकतमणिशिला-कुट्टिम-सुखायमान-चरणसञ्चार सूचितं, तमेव माधवीलतामण्डपं सम्प्राप्ताः स्मः, तदिहैव तिष्ठतु भवान्, यावत् अहं देवीवेशधारिणीं सागरिकां गृहीत्वा लघु आगच्छामि ।

---

(८) पालीति । इयं नियतं निश्चितं चम्पकानां पाली श्रेणी । अयमसौ दृश्यमान इत्यर्थः, सुन्दरः सिन्धुवारः, तथा वकुलविटपिनां वकुलद्रुमाणाम् इयं सान्द्रा निविड़ा वीथी राजिः, एषा पाटला पङ्क्तिः पाटलाहचस्य श्रेणी । अस्मिन् अधिगतैः विदितैः पादपैः चिह्नैः विविधं गन्धं आघ्राय आघ्राय आभीक्ष्ण्ये द्विरुक्तिः । द्विगुणतरमिति क्रियाविशेषणं तमोविशेषणं वा, तत्र द्विगुणतरैः तमोभिः निह्नुत इत्यपकृष्टभेदः, एष पन्था व्यक्तिं स्फुटतां प्रयाति चम्पकाद्यनेकविधचिह्नैः स्पष्टं पन्था अनुमीयत इत्यर्थः । अत्र अपह्नवानुमानयोः सजातीयसङ्करः । स्रग्धरा वृत्तम् ।

विदू। वअस्स! मा उत्तम्म, एसो आअदोम्हि (१)।
[इति निष्क्रान्तः।]

राजा। तावत् अहमपि अस्यां मरकतशिलावेदिकायाम् उपविश्य प्रियायाः सङ्केतसमयं प्रतिपालयामि। [उपविश्य सचिन्तम्।] अहो! कोऽपि कामिजनस्य स्वगृहिणीसमागमपरिभाविनोऽभिनवजनं प्रति पक्षपातः। तथाहि,

प्रणयविशदां दृष्टिं वक्त्रे ददाति न शङ्किता
घटयति घनं कण्ठाश्लेषे रसान्न पयोधरौ।
वदति बहुशो गच्छामीति प्रयत्नधृताप्यहो
रमयतितरां सङ्केतस्था तथापि हि कामिनी॥(८)

अये! कथं चिरयति वसन्तकः, तत् किं नु खलु विदितः स्यादयं वृत्तान्तो देव्या वासवदत्तया।

ततः प्रविशति वासवदत्ता काञ्चनमाला च।

वास। हञ्जे काञ्चनमाले! सच्चं एव्व मह वेसधारिणी भविअ, साअरिआ अज्जउत्तं अहिसरिस्सदित्ति? (२)।

---

(१) वयस्य! मा उत्ताम्य, एष आगतोऽस्मि।

(२) हञ्जे काञ्चनमाले! सत्यमेव मम वेशधारिणी भूत्वा, सागरिका आर्य्यपुत्रमभिसरिष्यतीति?

---

(८) प्रणयेति। शङ्किता सती प्रणयेन प्रेम्णा विशदां शुभ्रां अनुरक्तां दृष्टिं वक्त्रे मुखे न ददाति न अर्पयति, रसात् अनुरागात् रसं विधाय ल्यब्लोपे पञ्चमी। घनं निविड़ं यथा भवति तथा कण्ठाश्लेषे कण्ठालिङ्गने सति पयोधरौ कुचौ न घटयति न योजयति। प्रयत्नधृतापि प्रयत्नगृहीतापि अहं गच्छामीति बहुशो बारं बारं वदति, तथापि कामिनी सङ्केतस्था कृतसङ्केता इति कृत्वा रमयतितराम् अतिशयेन प्रमोदयति। हरिणी वृत्तम्।

काञ्च । कधं अखधा भट्टिणीए णिवेदीअदि? अहवा चित्तसालिआदुवारे उवविट्ठो वसन्तअ ज्जेव्व दे पच्चअं उप्पादइस्सदि (१)

वास । तेण हि तदा तहिं ज्जेव्व गच्छम्ह (२) ।

काञ्च । एदु एदु भट्टिणी (३) । [ परिक्रामतः । ]

ततः प्रविशति कृतावगुण्ठनो वसन्तकः ।

विदू । [ कर्णौ दत्त्वा । ] जह अअं चित्तसालिआदुवारे पदसद्दो सुणीअदि, तह तक्केमि आअदा साअरिआत्ति (४) ।

काञ्च । भट्टिणि ! इअं सा चित्तसालिआ, ता इध ज्जेव्व चिट्ठ, अहंपि वसन्तअस्स सण्णं देमि (५) । [ इति छोटिकां ददाति । ]

विदू । [ सहर्षं उपसृत्य सस्मितम् । ] सुसङ्गदे ! सदिसो क्खु तुए किदो कञ्चणमालाए वेसो, अध साअरिआ दाणिं कहिं (६) ।

---

(१) कथमन्यथा भर्त्री निवेद्यते ? अथवा चित्रशालिकाद्वारे उपविष्टो वसन्तक एव ते प्रत्ययमुत्पादयिष्यति ।

(२) तेन हि तदा तत्रैव गच्छामः ।

(३) एतु एतु भर्त्री ।

(४) यथा अयं चित्रशालिकाद्वारे पदशब्दः श्रूयते, तथा तर्कयामि आगता सागरिकेति ।

(५) भर्त्रि ! इयं सा चित्रशालिका, तदिहैव तिष्ठ, अहमपि वसन्तकस्य संज्ञां ददामि ।

(६) सुसङ्गते ! सदृशः खलु त्वया कृतः काञ्चनमालाया वेशः, अथ सागरिका इदानीं कुत्र ?

काञ्च। [अङ्गुल्या दर्शयन्ती।] णं एसा (१)।

विदू। [दृष्ट्वा। सविस्मयम्।] एसा फुड़ं ज्जेव्व देवी वासवदत्ता ? (२)।

वास। [ससम्भ्रममपवार्य्य।] कञ्चनमाले! कहं पच्च-भिण्णादाह्मि एदेण ता गमिस्सम् (३)।

विदू। भोदि साअरिए! इदो आअच्छ (४)।

[वासवदत्ता विहस्य काञ्चनमालामवलोकयति।]

काञ्च। भट्टिणि! एव्वं ण्णेदं। [अपवार्य्य विदूषकं अङ्गुल्या तर्जयन्ती!] हदास! सुमरिस्ससि एदं वअणं (५)।

विदू। तुवरदु तुवरदु साअरिआ, एसो क्खु पुव्वदिसादो उमाच्छदि भअवं मिअलञ्छणो (६)।

वास। [ससम्भ्रममपवार्य्य। भअवं मिअलञ्छण! णमो दे, मुहुत्तअं दाव अोवारिदसरीरो होहि, जेण पेक्खामि से भावाणुबन्धं (७)। [इति परिक्रामति।]

राजा। [सोत्कण्ठम्, आत्मगतम्।] उपस्थितप्रियासमागमस्यापि किमिदमत्यर्थमुत्ताम्यति मे मनः। अथवा

---

(१) ननु एषा।

(२) एषा स्फुटमेव देवी वासवदत्ता।

(३) काञ्चनमालि! कथं प्रत्यभिज्ञाताष्मि एतेन तद्गमिष्यामि।

(४) भवति सागरिके! इत आगच्छ।

(५) भर्त्रि! एवमिदम्। हताश! स्मरिष्यसि एतद् वचनम्।

(६) त्वरतां त्वरतां सागरिका, एष खलु पूर्वदिश उद्गच्छति भगवान् मृगलाञ्छनः।

(७) भगवन् मृगलाञ्छन! नमस्ते, मुहूर्त्तं तावदपवारितशरीरो भव, येन प्रेचे अस्य भावानुबन्धम्।

तीव्रः स्मरसन्तापो न तथादौ बाधते यथासन्ने ।
तपति प्रावृषि नितरामभ्यर्णजलागमो दिवसः ॥ (१०)

विदू । [ आकर्ण्य । ] भोदि साअरिए! एसो क्खु पिअवअस्सो तुमं ज्जेव्व उद्दिसिअ उक्कण्ठाणिब्भरं मन्तेदि, ता णिवेदेमि से तुह्मागमणम् (१) ।

वास । [ शिरश्चालयति । ]

विदू । [ राजानमुपसृत्य । ] भो वअस्स! दिट्ठिआ वड्डसे, एसा क्खु मए आणीदा साअरिआ (२) ।

राजा । [ सहर्षं सहसोत्थाय । ] क्वासौ क्वासौ ?

विदू । णं एसा (३) ।

राजा । [ उपसृत्य । ] प्रिये सागरिके !

शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भागर्भनिभं तवोरुयुगलं बाहू मृणालोपमौ ।
इत्याह्लादकराखिलाङ्गि ! रभसान्निःशङ्कमालिङ्ग्य मां
अङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥ (११)

---

(१) भवति! सागरिके! एष खलु प्रियवयस्यः त्वामेवोद्दिश्य उत्कण्ठानिर्भरं मन्त्रयति, तत् निवेदयामि तस्मै तवागमनम् ।

(२) भो वयस्य! दिष्ट्या वर्द्धसे, एषा खलु मया आनीता सागरिका ।

(३) ननु एषा ।

---

(१०) तीव्र इति । तीव्रो दुःसहः स्मरसन्तापः कामजनितव्यथा आसन्ने प्रियसमागमस्य समीपवर्तिनि काले यथा बाधते पीडयति तथा आदौ प्रथमसमागमकाले न बाधते इति । प्रावृषि वर्षासु अभ्यर्णो निकटवर्त्ती जलागमो वृष्टिः यत्र स दिवसः नितरां तपति सातिशयं व्यथयति जनानिति शेषः । वर्षाकाले जलभरितमेघपूर्णदिवसस्य तापजनकत्वात् अतापजनकत्वात् चेति भाव इति दृष्टान्तालङ्कारः स्फुट एव । आर्य्या वृत्तम् ।

(११) शीतांशुरिति । तव मुखं शीतांशुः चन्द्रत्वेन परिणतमित्यर्थः । दृशौ

वास। [सवाष्पमपवार्य्य।] कञ्चणमाले! एव्वं सअं मन्तेदि अज्जउत्तो, पुणोवि कहं मं आलविस्सदित्ति, अहो अच्चरीअं (१)।

काञ्च। [अपवार्य्य।] भट्टिणि! एव्वं एदं, किं उण अवरं साहसिआणं पुरिसाणं ण सम्भावीअदि (२)।

विदू। भोदि साअरिए! वीसद्धा भविअ, पिअवअस्सं आलवेहि, अज्जावि दाव से णिच्चरुट्टाए देवीए वासवदत्ताए दुव्वअणेहिं कडुकिदाइं सोत्ताइं सम्पदं सुहावेदु तुह महुर-वअणोवण्णासो (३)।

वास। [सरोषमपवार्य्य।] हञ्जे कञ्चणमाले! अहं ईदिसी कडुअभासिणी, अज्जवसन्तओ उण पिअंवदो (४)।

---

(१) काञ्चनमाले! एवं स्वयं मन्त्रयति आर्य्यपुत्रः, पुनरपि कथं मां आलपिष्यति इति, अहो आश्चर्य्यम्।

(२) भर्त्रि! एवमेतत, किं पुनरपरं साहसिकानां पुरुषाणां न सम्भाव्यते।

(३) भवति सागरिके! विश्रब्धा भूत्वा, प्रियवयस्यमालप, अद्यापि तावत् अस्याः नित्यरुष्टाया देव्या वासवदत्ताया दुर्वचनैः कटुकृतानि श्रोत्राणि साम्प्रतं सुखयतु तव मधुरवचनोपन्यासः।

(४) हञ्जे काञ्चनमाले! अहमीदृशी कटुभाषिणी आर्य्यवसन्तकः पुनः प्रियंवदः।

---

दृष्टी उत्पले नीलपद्मे, करौ पद्मानुकारौ पद्मसदृशौ। तव ऊरुयुगलं ऊरुद्वयं रम्भायाः कदल्या गर्भनिभं तत्सदृशं बाहू मृणालोपमौ मृणालवत् सुन्दरौ कोमलौ सरलौ च इति हेतोः हे आह्लादकराखिलाङ्गि! आह्लादजनकसर्वदेहे! त्वं एह्येहि सत्वरमागच्छ, आभीक्ष्ण्ये द्विर्भावः। रभसात् हर्षात् निःशङ्कं यथा तथा मामालिङ्ग्य आश्लिष्य अनङ्गतापविधुराणि कामसन्तापदूनानि अङ्गानि ममेत्यर्थः, निर्वापय प्रशमय शीतलीकुरु। अन्यथा जीवनधारणमतीव दुष्करमित्यर्थः। अत्र निश्चयान्तसन्देहालङ्कारः। शार्दूलविक्रीडितम् वृत्तम्।

काञ्च । [ अपवार्य्य अङ्गुल्या तर्जयन्ती । ] हदास ! सुमरिस्ससि एदं वअणम् (१) ।

विदू । [ विलोक्य । ] भो वअस्स ! पेक्ख पेक्ख, एसो क्खु कुविदकामिणीकवोलसप्पहो सव्वं पआसअन्तो, उदिदो भअवं मिअलञ्छणो (२) ।

राजा । [ निरूप्य सस्पृहम् । ] प्रिये ! पश्य पश्य ।

आरुह्य शैलशिखरं त्वद्वदनापहृतकान्तिसर्वस्वः ।
प्रतिकर्त्तुमिवोर्द्ध्वकरः स्थितः पुरस्तान्निशानाथः ॥ (१२)

अपिच । ननु प्रिये ! किं न दर्शितमनेन उद्गच्छता जड़त्वम् ? कुतः ? ।

किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किम्
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव विम्बाधरे ॥ (१३)

---

(१) हताश ! स्मरिष्यसि इदं वचनम् ।

(२) भो वयस्य ! पश्य पश्य ! एष खलु कुपितकामिनीकपोलसप्रभः सर्वं प्रकाशयन् उदितो भगवान् मृगलाञ्छनः ।

---

(१२) आरुह्येति । हे प्रिये ! तव वदनेन अपहृतं कान्तिरेव सर्वस्वं यस्य सः ऊर्द्ध्वं विस्तारिताः स्वकिरणाः करौ हस्तौ च यस्य तादृशो निशानाथः चन्द्रः प्रतिकर्त्तुं प्रतीकारार्थमिव इत्युत्प्रेक्षा । शैलशिखरं गिरिशृङ्गम् आरुह्य पुरस्तात् स्थितः । यथान्यः कश्चित् अन्यापहृतसर्वस्वः पर्वतशिखरे प्रतीकारार्थं तपः चरति इति ध्वन्यते । आर्य्या वृत्तम् ।

(१३) किमिति । तव वक्त्रेन्दुः मुखशशी किं पद्मस्य कमलस्य रुचिं शोभां न हन्ति अत्र काकुः हन्त्येव इत्यर्थः । तथा नयनानां जनचक्षुषां आनन्दं किं न

वास। [सरोषमवगुण्ठनपटमपनीय।] अज्जउत्त! सच्चं एव्व अहं साअरिआ, तुमं उण साअरिओक्खित्तहिअओ, सव्वं एव्व साअरिआमअं पेक्खसि (१)।

राजा। [दृष्ट्वा सवैलक्ष्यम्।] हा धिक्! कष्टम्, कथं देवी वासवदत्ता! वयस्य! किमेतत्?।

विदू। [सविषादम्।] भो वअस्स! किं अवरं, अह्माणं जीविदसंसओ जादो एसो (२)।

राजा। [उपविश्य अञ्जलिं बद्ध्वा।] प्रिये वासवदत्ते! प्रसीद प्रसीद।

वास। [तदभिमुखमश्रूणि निपातयन्ती।] अज्जउत्त! मा एव्वं भण, अणत्थगदाइं इमाइं अक्खराइं (३)।

विदू। [आत्मगतम्।] किं दाणिं एत्थ करिस्सं, भोदु एव्वं

---

(१) आर्य्यपुत्र! सत्यमेव अहं सागरिका, त्वं पुनः सागरिकोत्क्षिप्तहृदयः सर्व्वमेव सागरिकामयं पश्यसि।

(२) भो वयस्य! किमपरम्, अस्माकं जीवितसंशयो जात एषः।

(३) आर्य्यपुत्र! मा एवं भण, अनर्थगतानि एतानि अक्षराणि।

---

धत्ते कुरुते अत्रापि काकुः। तथाच आलोकमात्रेण दर्शनमात्रेण झषो मीनः केतनं ध्वजो यस्य तस्य कामस्य किं वृद्धिं न कुरुते अपि तु कुरुत एव इत्यर्थः। चन्द्रत्वन्मुखचन्द्रयोः कामोद्दीपकत्वसाम्यमस्त्येव इति तात्पर्य्यम्। अत एव तव वक्त्रेन्दौ सति अयमपरोऽन्यः शीतांशुः चन्द्र उज्जृम्भते उदेति तद्‌व्यर्थ एव इति तात्पर्य्यम्। त्वन्मुखस्य चन्द्रस्य च समानकार्य्यकारित्वे चन्द्रोदयो विफल एव। ननु चन्द्रस्तु सुधाधारः त्वन्मुखचन्द्रस्तु न तथा इति वाच्यमिति, तथात्वेऽपि साम्यं दर्शयितुमाह—"दर्प इति" चेत् यदि अमृतेन सुधया निमित्तेन दर्पो गर्वः स्यादर्थात् चन्द्रस्य तदपि वृथा इति कुत इत्याशयेन आह,—इह तव विम्बाधरे तदपि अमृतमपि अस्ति। एतेन साम्यं दर्शितम्। शार्दूलविक्रीडितम् वृत्तम्।

दाव। [प्रकाशम्।] भो! महानुभावा क्खु तुमं, ता क्खमीअदु दाव एक्को अवराहो पिअवअस्सस्स (१)।

वास। अज्ज वसन्तअ! णं पढ़मसङ्गमे विग्घं करन्तीए मए ज्जेव्व एदस्स अवरद्धं, ण अज्जउत्तेण (२)।

राजा। एवं प्रत्यक्षव्यलीकः किं ब्रवीमि, तथापि विज्ञापयामि।

आताम्रतामपनयामि विलक्ष एष
लाक्षाकृतां चरणयोस्तव देवि! मूर्ध्ना।
कोपोपरागजनितान्तु मुखेन्दुबिम्बे
हर्त्तुं क्षमो यदि परं करुणा मयि स्यात्॥ (१४)

[इति पादयोः पतति।]

वास। [हस्तेन वारयन्ती।] अज्जउत्त! उट्ठेहि उट्ठेहि, णिल्लज्जो क्खु सो जणो जो अज्जउत्तस्स ईदिसं हिअअं जाणिअ पुणोवि कुप्पदि, ता सुहं चिट्ठदु अज्जउत्तो, अहं गमिस्सं (३)। [इति गच्छति।]

---

(१) किमिदानीं अत्र करिष्यामि, भवतु एवं तावत्, भो! महानुभावा खलु त्वम्, तत् क्षम्यतां तावदेकोऽपराधः प्रियवयस्यस्य।

(२) आर्य्य वसन्तक! ननु प्रथमसङ्गमे विघ्नं कुर्वन्त्या मयैव एतस्य अपराद्धं, न आर्य्यपुत्रेण।

(३) आर्य्यपुत्र! उत्तिष्ठोत्तिष्ठ, निर्लज्जः खलु स जनो य आर्य्यपुत्रस्य ईदृशं हृदयं ज्ञात्वा पुनरपि कुप्यति, तत् सुखं तिष्ठतु आर्य्यपुत्रः, अहं गमिष्यामि।

---

(१४) आताम्रेति। हे देवि! विलक्षो लज्जित एषोऽयं तव चरणयोः लाक्षाकृताम् अलक्तकरचिताम् आताम्रतां ईषत्ताम्रवर्णत्वं मूर्ध्ना मम मस्तकेन अपनयामि, तथा मुखेन्दुबिम्बे कोपोपरागजनितां कोपराहुग्रस्तां आताम्रतां तु हर्त्तुं क्षमः चुम्बनेन इति भावः। परं किन्तु यदि मयि करुणा स्यात्, अन्यथा न अहं शक्नोमि हर्त्तुमित्यर्थः। वसन्ततिलकम् वृत्तम्।

काञ्च । भट्टिणि ! करेहि पसादं एव्वं चरणपड़िअं महाराअं उज्झिअ गदाए देवीए अवस्सं पच्छादावेण होदव्वं (१)

वास । अवेहि, अपण्डिदे ! कुदो एत्थ पसादस्स पच्छादावस्स वा कारणं ता गच्छम्ह ( २ ) । [ इति निष्क्रान्ते । ]

राजा । देवि ! प्रसीद प्रसीद ।

विदू । भो ! उट्ठेहि उट्ठेहि, गदा सा वासवदत्ता देवी, ता कीस एत्थ अरस्सरुदिदं करेसि ( ३ ) ।

राजा । [ मुखमुत्तानीकृत्य । ] कथम् अकृत्वैव प्रसादं गता देवी ।

विदू । न किदो कहं पसादो ? जं अज्जवि अह्मे अक्खदसरीरा चिट्ठम्ह ( ४ ) ।

राजा । धिङ्मूर्ख ! किमेवम् उपहससि मां, ननु त्वत्कृत एव अयमापतितोऽस्माकमनर्थक्रमः । यतः

समारूढ़ा प्रीतिः प्रणयबहुमानादनुदिनम्
व्यलीकं वीक्ष्येदं कृतमकृतपूर्वं खलु मया ।
प्रिया मुञ्चत्यद्य स्फुटमसहना जीवितमसौ
प्रकृष्टस्य प्रेम्णः स्खलितमविसह्यं हि भवति ॥ ( १५ )

---

(१) भर्त्रि ! कुरुष्व प्रसादं, एवं चरणपतितं महाराजमुज्झित्वा गतायां देव्या अवश्यं पश्चात्तापेन भवितव्यम् !

(२) अपेहि, अपण्डिते ! कुतोऽत्र प्रसादस्य पश्चात्तापस्य वा कारणम् ? तत् गच्छामः ।

(३) भो ! उत्तिष्ठोत्तिष्ठ, गता सा वासवदत्ता देवी, तत् कथमत्र अरण्यरुदितं करोषि ।

(४) न कृतः कथं प्रसादो ? यदद्यापि वयमक्षतशरीरास्तिष्ठामः ।

---

(१५) समारूढ़ेति । प्रणयबहुमानात् अनुदिनं प्रीतिः समारूढ़ा जाता यत्रैव

विदू । भो ! रुट्ठा देवी दाव, ण जाणीअदि किं करिस्सदि, साअरिआ उण जीवदि ण वेत्ति (१) ।

राजा । वयस्य ! अहमपि एवं चिन्तयामि । हा प्रिये सागरिके ! ।

तत: प्रविशति वासवदत्तावेशधारिणी सागरिका ।

साग । [ सोद्वेगम् । ] दिट्ठिआ इमिणा विरइददेवीवेसेण इमादो सङ्गीदसालादो णिक्कमन्ती केणावि ण लक्खिदम्हि, ता दाणिं किं करिस्सम् ? (२) । [ इति सास्रं चिन्तयति । ]

विदू । भो ! किं मूढ़ो विअ चिट्ठसि, चिन्तेहि एत्थ पडिआरं (३) ।

राजा । वयस्य ! तदेव चिन्तयामि । देवीप्रसादं मुक्त्वा नान्यमुपायं पश्यामि, तदेहि तत्रैव गच्छाव: । [ इति परिक्रामत: । ]

---

(१) भो: ! रुष्टा देवी तावत्, न ज्ञायते किं करिष्यति, सागरिका पुनर्जीवति न वेति ।

(२) दिष्ट्या अनेन विरचितदेवीवेशेन अस्या: सङ्गीतशालाया निष्क्रामन्ती केनापि न लक्षितास्मि, तत् किमिदानीं करिष्यामि ? ।

(३) भो: ! किं मूढ़ इव तिष्ठसि, चिन्तय अत्र प्रतीकारम् !

---

प्रणयाधिक्यं तत्रैव प्रीत्यतिशय इति तात्पर्य्यार्थ: । प्रिया वासवदत्ता अकृतपूर्वं पूर्वं कदापि न कृतं मया कृतमिदं सागरिकायामासक्तिलक्षणं व्यलीकं अकार्य्यं वीक्ष्य दृष्ट्वा खलु अद्य कालविलम्बमकृत्वैव असहना सोढ़ुमशक्ता सती असौ जीवितं प्राणान् मुञ्चति उद्बन्धनादिव्यापारेण जीवितं त्यजति स्फुटमित्युत्प्रेक्षे । तथाह्यर्थान्तरं न्यस्यति, हि यत: प्रकृष्टस्य प्रगाढ़स्य प्रेम्ण: प्रणयस्य स्खलितं भङ्ग: अविसह्यं सोढ़ुमशक्यं भवति इत्यर्थ: । प्रगाढ़प्रेम्णि नायिकास्तु नायकानामणुमपि अपराधं वीक्ष्य सहसा प्राणत्यागाय यतन्ते इति प्रसिद्धमत्र अर्थान्तरन्यासोत्प्रेक्षयो: सङ्कर: । शिखरिणी वृत्तम् ।

सागा। [ विमृश्य सास्रम्। ] वरं दाणिं सग्रं ज्जेव अप्पाणं उव्बन्धिअ उवरदा भविस्सं, ण उण विदिदसङ्केतवुत्तन्ताए सुसङ्गदाए सह देवीए परिभूदा चिट्‌ठिस्सं, ता जाव अहं असोअपादवदले गदुअ, जह समीहिदं करिस्सं ( १ )। [ इति परिक्रामति। ]

विदू। [ आकर्ण्य। ] चिट्‌ठ दाव चिट्‌ठ, भो! पदसद्दो सुणीअदि, जाणामि कदावि गहिदपच्छादावा पुणोवि देवी आअदा भवे ( २ )।

राजा। वयस्य! महानुभावा खलु देवी, कदाचित् एवमपि स्यात्, तत् त्वरितं निरूपय।

विदू। जं भवं आणवेदि ( ३ )। [ इति निष्क्रामति। ]

सागा। [ उपसृत्य। ] ता जाव इमाए माहवीलदाए पासं विरइअ इह ज्जेव असोअपादवे अप्पाणं उव्बन्धिअ वावादेमि। [ इति लतापाशं रचयन्ती। ] हा ताद! हा अम्ब! एसा दाणिं अहं अणाधा, असरणा, विवज्जामि मन्दभाइणी ( ४ )। [ इति कण्ठे लतापाशमर्पयति। ]

---

(१) वरमिदानीं स्वयमेवात्मानमुद्बध्य उपरता भविष्यामि, न पुनर्विदितसङ्केतवृत्तान्तया सुसङ्गतया सह देव्या परिभूता तिष्ठामि, तद्यावदहमशोकपादपतले गत्वा, यथासमीहितं करिष्यामि।

(२) तिष्ठ तावत् तिष्ठ, भोः! पदशब्दः श्रूयते, जानामि कदापि गृहीतपश्चात्तापा पुनरपि देवी आगता भवेत्।

(३) यद्भवान् आज्ञापयति।

(४) तद्यावत् अनया माधवीलतया पाशं विरचय्य इहैव अशोकपादपे आत्मानमुद्बध्य व्यापादयामि। हा तात! हा अम्ब! ( मातः! ) एषा इदानीमहमनाथा अशरणा विपद्ये मन्दभागिनी।

विदू। [विलोक्य।] का उण एसा, कहं उण देवी वासवदत्ता [ससम्भ्रममुच्चैः।] भो वअस्स! परित्ताहि परित्ताहि, एसा क्खु देवी वासवदत्ता अप्पाणं उब्बन्धिअ वावादेदि (१)।

राजा। [ससम्भ्रममुपसृत्य।] वयस्य! क्वासौ क्वासौ।

विदू। णं एसा। (२)

राजा। [कण्ठात् पाशमपनयन्।] अयि साहसकारिणि! किमिदमकार्य्यं क्रियते?।

मम कण्ठगताः प्राणाः पाशे कण्ठगते तव।
अतः स्वार्थः प्रयत्नोऽयं त्यज्यतां साहसं प्रिये!॥ (१६)

साग। [राजानं दृष्ट्वा।] अम्मो! कधं एसो भट्टा। [सहर्षमात्मगतम्।] जं सच्चं एणं पेक्खिअ, पुणोवि मे जीविदाहिलासो सम्वुत्तो, अहवा एणं पेक्खिअ, कदत्था भविअ, सुहेण अप्पाणं उब्बन्धिअ जीविदं परिच्चइस्सम्। [प्रकाशम्।] मुञ्चदु मुञ्चदु मं भट्टा, पराहीणो क्खु अअं जणो ण उण ईदिसं अवसरं मरिदुं पावेदि, तुमंपि देवीए

(१) का पुनरेषा, कथं पुनर्देवी वासवदत्ता। भो वयस्य! परित्रायस्व परित्रायस्व, एषा खलु देवी वासवदत्ता आत्मानमुद्बध्य व्यापादयति।

(२) नन्वेषा।

(१६) ममेति। पाशे बन्धनरज्जौ तव कण्ठगते सति मम प्राणाः कण्ठगता भवन्ति, त्वयि मृतायामहमपि मृतः स्यामित्यर्थः। अतो हेतोः अयं प्रयत्नः त्वदीयप्राणरक्षाविषयः स मम स्वार्थः स्वीयप्रयोजनसाधनरूपः। त्वयि मरणात् रक्षितायां अहमपि रक्षितो भवेयमित्यर्थः। तेन हे प्रिये! इति कातरसम्बोधनं, साहसं प्राणपरित्यागोद्यमरूपं त्यज्यतां एतदनौचित्यं तव इत्यर्थः। अत्राद्ये पादेऽसङ्गतिरलङ्कारः, यदुक्तं दर्पणकृता—"कार्य्यकारणयोः भिन्नदेशतायामसङ्गतिरिति लक्षणात्। अनुष्टुब् वृत्तम्।

मा अप्पाणं अवराहिणं करेसि (१)। [इति पुनः कण्ठे पाशं दातुमिच्छति।]

राजा। [निरूप्य सहर्षम्।] कथं प्रिया मे सागरिका। [इति कण्ठात् पाशमाक्षिप्य।]

अलमलमतिमात्रं साहसेनामुना ते
त्वरितमयि विमुञ्च त्वं लतापाशमेनम्।
चलितमपि निरोद्धुं जीवितं जीवितेशे!
क्षणमिह मम कण्ठे बाहुपाशं निधेहि॥ (१७)

[इति बाहुपाशमाक्षिप्य कण्ठे ददाति। विदूषकं प्रति।] सखे! इयमनभ्रा वृष्टिः।

विदू। भो! एव्वं णेदं, जइ अआलवादावली भविअ ण आआदि देवी वासवदत्ता (२)

---

(१) अहो! कथमेष भर्त्ता, यत् सत्यमेनं दृष्ट्वा पुनरपि मे जीविताभिलाषः संवृत्तः, अथवा एनं दृष्ट्वा, कृतार्था भूत्वा, सुखेन आत्मानं उद्बध्य जीवितं परित्यक्ष्यामि। मुञ्चतु मुञ्चतु मां भर्त्ता, पराधीनः खलु अयं जनो न पुनरीदृशं अवसरं मर्त्तुं प्राप्नोति, त्वमपि देव्या मा आत्मानं अपराधिनं करोषि।

(२) भो! एवमिदं, यदि अकालवातावली भूत्वा न आयाति देवी वासवदत्ता।

---

(१७) अलमिति। अतिमात्रं यथा भवति तथा ते तव अमुना उद्बन्धनव्यापाररूपेण साहसेन अलमलमिति सम्भ्रमे द्विर्भावः, अलं योगेन तृतीया। अयि सागरिके! त्वं त्वरितं झटिति एनं लतापाशं विमुञ्च परित्यज। हे जीवितेशे! प्राणेश्वरि! चलितं, देहं विहाय निर्गतम् जीवितं ममेत्यर्थः, निरोद्धुं रक्षितुं क्षणमिह मम कण्ठे बाहुपाशं निधेहि अर्पय, आलिङ्गनदानेन गमनप्रवणं मदीयजीवितं रक्षेत्यर्थः। अपिः सम्भावनार्थः। मालिनी वृत्तम्।

ततः प्रविशति वासवदत्ता काञ्चनमाला च ।

वास । हञ्जे कञ्चणमाले ! तह्वा चरणणिवडिदं अज्जउत्तं अवधीरिअ आअच्छन्तीए मए अदिणिट्ठुरं किदं, ता दाणिं सअं एव्व गदुअ अज्जउत्तं अणुणइस्सं (१)।

काञ्च । को अस्सो देवीं वज्जिअ एव्वं भणिदुं जाणादि, वरं सो एव्व देवो दुज्जणो होदु, ण उण देवी, ता एदु एदु देवी (२)। [ इति परिक्रामतः । ]

राजा। अयि मुग्धे ! किम् अद्यापि वयं विफलमनोरथाः क्रियामहे ।

काञ्च । भट्टिणि ! जह समीवे भट्टा मन्तेदि, तह तक्केमि, तुमं ज्जेव्व अणुणेदुं आअच्छदि, ता उवसप्पदु भट्टिणी (३) !

वास । [ सहर्षम् । ] ता अलक्खिता एव्व पुट्ठदो गदुअ, कण्ठे गेण्हिअ पसादइस्सं (४)।

विदू । भोदि साअरिए ! वीसद्धा भविअ, पिअवअस्सं आलवेहि (५)।

---

(१) हञ्जे काञ्चनमाले ! तथा चरणनिपतितं आर्य्यपुत्रमवधीर्य्य आगच्छन्त्या मया अतिनिष्ठुरं कृतं, तदिदानीं स्वयमेव गत्वा आर्य्यपुत्रमनुनेष्यामि ।

(२) कोऽन्यो देवीं वर्जयित्वा एवं भणितुं जानाति, वरं स एव देवो दुर्ज्जनो भवतु, न पुनर्देवी, तत् एतु एतु देवी ।

(३) भर्त्रि ! यथा समीपे भर्त्ता मन्त्रयति, तथा तर्कयामि, त्वामेवानुनेतुमागच्छति, तदुपसर्पतु भर्त्री ।

(४) तत् अलक्षितैव पृष्ठतो गत्वा, कण्ठे गृहीत्वा प्रसादयिष्यामि ।

(५) भवति सागरिके ! विश्वस्ता भूत्वा, प्रियवयस्यमालप

वास। [ कर्णौ दत्त्वा सकोपम्। ] कञ्चणमाले! साग्र-रिआवि एत्थ एव्व चिट्ठदि, ता सुणम्ह दाव जाणिअ पच्छा उपसप्पिस्सं (१)। [ इति तथा स्थिते। ]

साग। भट्टा! किं एदिणा अलीअदाक्खिस्सेण, जीविदादोवि अधिअवल्लहाए देवीए, पुणोवि अप्पाणं अवराहिणं करेसि? (२)।

राजा। अयि! मिथ्यावादिनो खलु असि। कुतः,—
श्वासोत्कम्पिनि कम्पितं स्तनयुगे, मौने प्रियं भाषितम्
वक्त्रेऽस्याः कुटिलीकृतभ्रुवि तृषा यातं मया पादयोः।
इत्थं न सहजाभिजात्यजनिता सेवैव देव्याः परम्।
प्रेमाबन्धविवर्द्धिताधिकरसा प्रीतिस्तु या सा त्वयि॥ (१८)

वास। [उपसृत्य सरोषम्। ] अज्जउत्त! सरिसं एदं (३)।

---

(१) काञ्चनमाले! सागरिकापि अत्रैव तिष्ठति, तत् शृणुमः तावत् ज्ञात्वा पश्चादुपसर्पिष्यामि।

(२) भर्त्तः! किमेतेन अलीकदाक्षिण्येन, जीवितादपि अधिकवल्लभाया देव्याः पुनरपि आत्मानमपराधिनं करोषि?

(३) आर्य्यपुत्र! सदृशमिदम्।

---

(१८) श्वासेति। अस्याः वासवदत्तायाः स्तनयुगे श्वासेन उत्कम्पिनि उत्कम्पयुक्ते सति मया कम्पितं मौने अस्यास्तूष्णीं भावे सति प्रियं चाटु भाषितं अस्या वक्त्रे तृषा प्रणयकोपेन कुटिलीकृते भ्रुवौ यस्य तादृशे सति मया पादयोर्यातम्। इत्थमनेन प्रकारेण मोऽस्माकं सहजेन नैसर्गिकेण आभिजात्येन कुलगौरवेण जनिता सेवैव परं केवलं देव्या वासवदत्तायाः एवम्भूता सेवैव केवलं देव्यै मया क्रियत इत्यर्थः। तु किन्तु प्रेमाबन्धेन प्रणयबन्धनेन विवर्द्धितो वृद्धिं गतोऽधिकरसोऽनुरागो यत्र एवम्भूता या प्रीतिः प्रेम सा त्वयि विद्यते इत्यर्थः। त्वयि तु प्रणयाकृष्टं मे मनः समर्पितमस्ति, देव्यै तु केवलं अनिच्छया मनो दीयते इत्यतो मयि कोपस्ते अयुक्तः इति भावः। शार्दूलविक्रीडितम् वृत्तम्।

राजा । [ दृष्ट्वा सवैलक्ष्यम् । ] देवि ! न खलु अकारणं मामुपालब्धुम् अर्हसि । त्वामेव मत्वा वेशसादृश्यविप्रलब्धा वयमिह आगताः । तत् क्षम्यताम् । [इति पादयोः पतति । ]

वास । [ सरोषम् । ] अज्जउत्त ! उट्ठेहि उट्ठेहि, किं अज्जवि सहजाभिजादाए सेवाए दुक्खं अणुभवीअदि ? (१)

राजा । [ स्वगतम् । ] किम् एतदपि श्रुतं देव्या ? तत् सर्वथा देवीप्रसादनोपायं प्रति निराशीभूताः स्मः । [ इति अधोमुखस्तिष्ठति ।]

विदू । भोदि ! तुमं किल अत्ताणअं उव्बन्धिअ विवदेसेत्ति वेससारिस्सभोहिदेण मए पिअवअस्सो एत्थ आणीदो ! जइ मम वअणं ण पत्तिआअसि, ता पेक्ख इमं लदापासं (२) । [ इति लतापाशं दर्शयति । ]

वास । [ सकोपम् । ] हञ्जे कञ्चनमाले ! एदेण एव्व लदापासेण बन्धिअ गेण्ह बह्मणं एणं, दुट्ठकण्णआं अ अग्गदो करेहि ( ३ ) ।

काञ्च । जं देवी आणवेदि । [ इति लतापाशेन वसन्तकं गले बद्ध्वा ताड़यति । ] हदास ! अणुभव दाव अत्तणो अविणअस्स फलं, देवीए दुव्वअणेण कडुइदाइं

---

( १ ) आर्य्यपुत्त्र ! उत्तिष्ठोत्तिष्ठ । किमद्यापि सहजाभिजातया सेवया दुःखमनुभूयते ?

(२) भवति ! त्वं किल आत्मानमुद्बध्य विपद्यसे इति वेशसादृश्यमोहितेन मया प्रियवयस्योऽत्र आनीतः । यदि मे वचनं न प्रत्येषि, तदा पश्य इमं लतापाशम् ।

(३) हञ्जे काञ्चनमाले ! एतेनैव लतापाशेन बद्धा गृहाणैनं ब्राह्मणम्, दुष्टकन्यकाञ्च अग्रतः कुरु ।

सोत्ताए त्ति सुमरेहि तं वअणं, साअरिए! तुमंपि अमदो होहि (१)।

साग। [स्वगतम्।] अकिदपुस्साए मए मरिदुंपि अत्तणो इच्छाए ण पारिदं (२)।

विदू। [सविषादम्।] भो वअस्स! सुमरेहि मं अणाधं देवीए बन्धणादो विवज्जन्तं (३)। [इति राजानमवलोकयति।

सर्वानादाय निष्क्रान्ता वासवदत्ता।

राजा। [सखेदम्।] कष्टं भोः! कष्टम्।

किं देव्याः कृतदीर्घरोषमुषितस्निग्धस्मितं तन्मुखम्
किं वा सागरिकां क्रमोज्झितरुषा सन्तर्ज्यमानां तथा।
बद्धा नीतमितो वसन्तकमहं किं चिन्तयाम्यद्य भोः,
सर्वाकारकृतव्यथः क्षणमपि प्राप्नोमि नो निर्वृतिम्॥ (१८)

तत् किमिदानीम् इह स्थितेन प्रयोजनम्, देवीं प्रसादयितुम् अभ्यन्तरमेव प्रविशामि। [इति निष्क्रान्तः।]

इति सङ्केतो नाम तृतीयोऽङ्कः।

---

(१) यत् देवी आज्ञापयति। हताश! अनुभव तावदात्मनोऽविनयस्य फलं, देव्या दुर्वचनेन कटूकृतानि श्रोत्राणीति स्मर तद्वचनम्। सागरिके! त्वमपि अग्रतो भव।

(२) अकृतपुण्यया मया मर्तुमपि आत्मनः इच्छया न पारितम्।

(३) भो वयस्य! स्मर मामनाथं देव्या बन्धनात् विपद्यमानम्।

---

(१८) किमिति। कृतेन दीर्घेण रोषेण मुषितमपहृतं स्निग्धं स्मितं हसितं यस्मात् तत् देव्या मुखं किं चिन्तयामि, तथा क्रमेणोज्झिता त्यक्ता रुट् यस्याः तया देव्या सन्तर्ज्यमानां सागरिकां वा किमहं चिन्तयामि, किं वा इतो बद्धा नीतं स्थानान्तरं प्रापितं वसन्तकमहं चिन्तयामि, भो! अद्य सर्वेषु आकारेषु कृतव्यथः अथवा सर्वाकारेण सर्वथा कृतव्यथः असुखचित्तोऽहं क्षणमपि नो निर्वृतिं सुखं प्राप्नोमि, दुःखितस्य सुखोत्पत्त्यभावादिति भावः। शार्दूलविक्रीडितम् वृत्तम्।

# अथ चतुर्थोऽङ्कः ।

ततः प्रविशति रत्नमालामादाय साक्षा सुसङ्गता ।

सुसं । [ सकरुणम् निश्वस्य । ] हा पिअसहि साअरिए ! हा लज्जालुए ! हा सहीगणवच्छले ! हा उदारसीले ! हा सोम्मदंसणे ! कहिं गदा दाणिं तुमं मए पेक्खिदव्वा । [ इति रोदिति । ऊर्द्ध्वमवलोक्य निश्वस्य च । ] हंहो देव्वहदअ ! अकरुण ! असामाण्णरूअसोहा तादिसी तुए जइ णिम्मिदा, ता कीस उण ईदिसं अवत्थन्तरं पाविदा । इयञ्च रअणमालावि जीविदणिरासाए ताए कस्सवि बम्हणस्स हत्थे पडिवादेसुत्ति भणिअ मम हत्थे समप्पिता, ता जाव बम्हणं अण्णेसामि । [ नेपथ्याभिमुखमवलोक्य । ] अए कहं एसो क्खु बम्हणो वसन्तओ इधो ज्जेव्व आअच्छदि, ता इमस्सिं एव्व पडिवादेमि (१) ।

ततः प्रविशति हृष्टो वसन्तकः ।

वस । ही ही भोः ! अज्ज क्खु पिअवअस्सेण पसादिदाए देवीए वासवदत्ताए बन्धणादो मोचिअ, सहत्थ-

---

(१) हा प्रियसखि सागरिके ! हा लज्जालुके ! हा सखीगणवत्सले ! हा उदारशीले ! हा सौम्यदर्शने ! कुत्र गता इदानीं त्वं मया प्रेक्षितव्या । हंहो दैवहतक ! अकरुण ! असामान्यरूपशोभा तादृशी त्वया यदि निर्मिता, तत् कथं पुनरीदृशम् अवस्थान्तरं प्रापिता । इयञ्च रत्नमालापि जीवितनिराशया तया कस्यापि ब्राह्मणस्य हस्ते प्रतिपादयेति भणित्वा मम हस्ते समर्पिता, तद्यावत् ब्राह्मणम् अन्विष्यामि । अये ! कथमेष खलु ब्राह्मणो वसन्तक इतैव आगच्छति, तदस्मै एव प्रतिपादयामि ।

दिस्स हिं मोदअलड्डुएहिं उदरं किदं मे सुपूरिदं, अस्सञ्च एदं पट्ट' अम्बरजुअलं कसाभरणं अ दिस', ता जाव दाणिं पिअवअस्सं पेक्खिस्सं (१)। [ इति परिक्रामति। ]

सुसं। [ रुदती सहसोपसृत्य। ] अज्ज वसन्तअ! चिट्ठ दाव तुमं मुहुत्तअं ( २ )।

विदू। [ दृष्ट्वा। ] कधं सुसङ्गदा? सुसङ्गदे! एत्थ किं णिमित्तं रोईअदि? किं णु क्खु साअरिआए अच्चाहिदं संवुत्तं ( ३ )।

सुसं। अज्ज वसन्तअ! अच्चाहिदं ज्जेव्व णिवेदइस्सं, सा क्खु तवस्सिणी देवीए उज्जइणिं पेसिदेत्ति जणप्पवादं कदुअ, उवत्थिदे अड्डरत्ते ण जाणीअदि कहिं णीदेत्ति ( ४ )।

विदू। [ सोद्वेगम्। ] भोदि साअरिए! हा असामाण्ण-रूअसोहे! हा मिदुभासिणि! अदिणिट्ठुरं दे देवीए किदं ( ५ )।

---

(१) हो हो भो! अद्य खलु प्रियवयस्येन प्रसादितया देव्या वासवदत्तया बन्धनात् मोचयित्वा स्वहस्तदत्तैः मोदकलड्डुकैः उदरं कृतम् मे सुपूरितं, अन्यच्च एतत् पट्टम् अम्बरयुगलं कर्णाभरणञ्च दत्तं, तत् यावत् इदानीं प्रियवयस्यं प्रेक्षिष्ये।

(२) आर्य्य वसन्तक! तिष्ठ त्वं तावत् मुहूर्त्तकम्।

(३) कथं सुसंगता? सुसङ्गते! अत्र किं निमित्तं रुद्यते? किं नु खलु सागरिकाया अत्याहितं संवृत्तम्।

(४) आर्य्य वसन्तक! अत्याहितमेव निवेदयिष्यामि, सा खलु तपस्विनी देव्या उज्जयिनीं प्रेषितेति जनप्रवादं कृत्वा उपस्थिते अर्द्धरात्रे न ज्ञायते कुत्र नीतेति।

(५) भवति सागरिके! हा असामान्यरूपशोभे! हा मृदुभाषिणि! अति-निष्ठुरं ते देव्या कृतम्।

सुसं। एसा रअणमाला ताए जीविदणिरासाए अज्ज-वसन्तअस्स हत्थे पडिवादेसुत्ति भणिअ मम हत्थे समप्पिदा, ता णं गेण्हदु अज्जो एदं (१)।

विदू। [ साश्रु सकरुणं कर्णौ पिधाय। ] भोदि! कधं मम ईदिसे पत्थावे एदं गेण्हिदुं हत्थो पसरदि (२)। [ इत्युभौ रुदतः। ]

सुसं। [ अञ्जलिं बद्ध्वा। ] ताए एव्व अणुग्गहं करन्तो अङ्गीकरेदु एदं अज्जो (३)।

विदू। [ विचिन्त्य। ] अहवा उवणेहि, जेण इमाए ज्जेव्व साअरिआविरहुक्कण्ठिदं पिअवअस्सं विणोदेमि (४)।

सुसं। [ वसन्तकस्य हस्ते रत्नमालां ददाति। ]

विदू। [ गृहीत्वा निरूप्य सविस्मयम्। ] भोदि! कुदो उण ईदिसस्स अलङ्कारस्स समागमो? (५)।

सुसं। अज्ज! मएवि कोदूहलेण पुच्छिदं ज्जेव्व (६)।

विदू। तदो ताए किं भणिदं? (७)।

---

(१) एषा रत्नमाला तया जीवितनिराशया आर्य्यवसन्तकस्य हस्ते प्रतिपादयेति भणित्वा मम हस्ते समर्पिता, तत् ननु गृह्णातु आर्य्यः एताम्।

(२) भवति! कथं मम ईदृशे प्रस्तावे इमां ग्रहीतुं हस्तः प्रसरति।

(३) तस्या एवानुग्रहं कुर्वन् अङ्गीकरोतु एताम् आर्य्यः।

(४) अथवा उपनय, येन अनयैव सागरिकाविरहोत्कण्ठितं प्रियवयस्यं विनोदयामि।

(५) भवति! कुतः पुनरीदृशस्य अलङ्कारस्य समागमः?

(६) आर्य्य! मयापि कौतूहलेन पृष्टमेव।

(७) ततः तया किं भणितम्?

सुसं। तदो सा जव' पेक्खिय, दीहं णिस्ससिय, "सुस-ङ्गदे! किं दाणिं तुह इमाए कधाए" त्ति भणिय रोदिदुं पउत्ता (१)।

विदू। णं कधिदं एव्व मए, सामाणजणदुल्लहेण इमिणा परिच्छदेण सव्वधा महाभिजणसमुप्पणाए ताए होदव्वं। सुसङ्गदे! पिअवअस्सो दाणिं कहिं? (२)।

सुसं। अज्ज! एसो क्खु भट्टा देवीभवणादो णिक्कमिअ फड़िअसिलामण्डवं गदो, ता गच्छदु अज्जो, अहंवि देवीए वासवदत्ताए परिचारिणी भविस्सं (३)। [इति निष्क्रान्तौ प्रवेशकः।]

ततः प्रविशति आसनस्थो राजा।

राजा। [विचिन्त्य।]

सव्याजैः शपथैः प्रियेण वचसा चित्तानुवृत्त्याधिकम्
वैलक्ष्येण परेण पादपतनैर्वाक्यैः सखीनां मुहुः।
प्रत्यासत्तिमुपागता न हि तथा देवी रुदत्या यथा
प्रक्षाल्येव तथैव वाष्पसलिलैः कोपोऽपनीतः स्वयम्॥ (१)

---

(१) ततः सा जवं प्रेक्ष्य दीर्घं निश्वस्य, "सुसङ्गते! किमिदानीं तव अनया कथया" इति भणित्वा रोदितुं प्रवृत्ता।

(२) ननु कथितमेव मया, सामान्यजनदुर्लभेन अमुना परिच्छदेन सर्वथा महाभिजनसमुत्पन्नया तया भवितव्यम्। सुसङ्गते! प्रियवयस्य इदानीं क्व?।

(३) आर्य्य! एष खलु भर्त्ता देवीभवनात् निष्क्रम्य, स्फटिकशिलामण्डपं गतः, तद्गच्छतु आर्य्यः, अहमपि देव्या वासवदत्तायाः परिचारिणी भविष्यामि।

---

(१) सव्याजैरिति। देवी वासवदत्ता सव्याजैः सकपटैः शपथैः प्रियेण वचसा चाटूक्त्या अधिकं चित्तानुवृत्त्या चित्तानुवर्त्तित्वेन परेण अधिकेन

[ सोत्कण्ठं निश्वस्य। ] तावत् इदानीं देव्या प्रसादितायां सागरिकाचिन्तैव केवलं बाधते। कुतः,—

अम्भोजगर्भसुकुमारतनुस्तदासौ
कण्ठग्रहे प्रथमरागघने विलीय।
सद्यः पतन्मदनमार्गणरन्ध्रमार्गैः
मन्ये मम प्रियतमा हृदयं प्रविष्टा॥ (२)

[ विचिन्त्य। ] योऽपि मे विश्रामस्थानं वसन्तकः सोऽपि देव्या संयमितः, तत् कस्य अग्रतो बाष्पमोक्षं करिष्ये। [ इति निश्वसिति। ]

ततः प्रविशति वसन्तकः।

विदू। [ परिक्रम्यावलोक्य च सविस्मयम्। ] एसो क्खु पिअवअस्सो चिरन्तरकण्ठापरिक्खामांपि सलाहणिज्जं तणुं समुव्वहन्तो उदिदो दुइआचन्दो विअ अधिअदरं सोहदि, ता आव णं उपसप्पामि। [ उपसृत्य। ] सोत्थि भवदे,

---

वैलक्ष्ये च लज्जया, पादपतनैः प्रणामैः मुहुः सखीनां वाक्यैः नहि तथा प्रत्यासन्नि प्रसादमुपागता प्रापिता यथा तथैव रुदत्या देव्या बाष्पसलिलैः नयनजलैः प्रक्षाल्यैव स्वयं कोपोऽपनीतः प्रशमितः। प्रणयादिभिः उपायैः देव्याः कोपो न अपनीतः यथा तथैव विरलरोदनैरिति तात्पर्य्यार्थः। शार्दूलविक्रीडितम् वृत्तम्।

(२) अम्भोजेति। तदा प्रथमदर्शनकाले अम्भोजगर्भस्येव कमलगर्भवत् सुकुमारा कोमला तनुः शरीरं यस्याः असौ प्रिया सागरिका प्रथमेन नवेन रागेण अनुरागेण घने प्रगाढ़े कण्ठग्रहे आलिङ्गने विलीय मदङ्गे लयप्राप्तेव तदनन्तरम् आलिङ्गनसमय एव पततां क्षिप्तानां मदनमार्गणानां कामशराणां रन्ध्रमार्गैः छिद्रपथाभिः मम हृदयं प्रविष्टेव मन्ये, अन्यथा कथं सदैव चित्ता स्फुरति इति भावः। वसन्ततिलकं वृत्तम्।

भो दिट्ठिआ वड्ढसे, देवीहत्थगदेणावि मए पुणोवि एदेहिं अच्छीहिं जं दिट्ठोसि (१)।

राजा। [दृष्ट्वा सहर्षम्।] अये! वसन्तकः प्राप्तः। सखे! परिष्वजस्व माम्।

विदू। [परिष्वज्य।] भो वअस्स! देवीए अणुग्गहीदोम्हि (२)।

राजा। वेशेनैव निवेदितस्ते देव्याः प्रसादः, तत् कथ्यताम् इदानीं सागरिकायाः किं वर्त्तते इति।

विदू। [सवैलक्ष्यमधोमुखस्तिष्ठति।]

राजा। वयस्य! किं न कथयसि?

विदू। अप्पिअं णिवेदिदुं दे ण पारेमि (३)।

राजा। [सोद्वेगम् ससम्भ्रमम्।] वयस्य! कथमप्रियम् किं व्यक्तमेव उत्सृष्टं जीवितं तया?। हा प्रिये सागरिके!।

[इति मोहं नाटयति।]

विदू। [ससम्भ्रमम्।] समस्ससदु, समस्ससदु, पिअवअस्सो (४)।

राजा। [समाश्वस्य साश्रम्।]

---

(१) एष खलु प्रियवयस्यो निरन्तरोत्कण्ठापरिश्रामामपि श्लाघनीयां तनुं समुद्वहन् उदितो द्वितीयाचन्द्र इव अधिकतरं शोभते, तद्यावदेनमुपसर्पामि। स्वस्ति भवते, भो दिष्ट्या वर्द्धसे, देवीहस्तगतेनापि मया पुनरपि एतैः अक्षिभिः यत् दृष्टोऽसि।

(२) भो वयस्य! देव्या अनुगृहीतोऽस्मि।

(३) अप्रियं निवेदयितुं ते न पारयामि।

(४) समाश्वसितु समाश्वसितु प्रियवयस्यः।

प्राणाः ! परित्यजत काममदक्षिणं माम्
रे दक्षिणा भवत मद्वचनं कुरुध्वम्।
शीघ्रं न यात यदि तन्मुषिताः स्थ: नूनम्
याता सुदूरमधुना गजगामिनी सा ॥ (३)

विदू। भो! मा अण्णधा सम्भावेहि, सा क्खु तवस्सिणी देवीए उज्जइणिं पेसिदत्ति सुणीअदि, अदो मए अप्पिअं त्ति भणिदं (१)।

राजा। कथम् उज्जयिनीं प्रेषिता? अहो निरनुरोधा मयि देवी। वयस्य! केन तव एतदाख्यातम्?।

विदू। भो! सुसङ्गदाए। अण्णं च, मम हत्थे ताए केणावि कज्जेण इअं रअणमाला पेसिदा (२)।

राजा। किमपरं माम् आश्वासयितुम्। तद्वयस्य! उपनय।

विदू। [ उपनयति। ]

---

(१) भोः! मा अन्यथा सम्भावय, सा खलु तपस्विनी देव्या उज्जयिनीं प्रेषितेति श्रूयते, अतो मया अप्रियमिति भणितम्।

(२) भोः! सुसङ्गतया। अन्यच्च, मम हस्ते तया केनापि कार्य्येण इयं रत्नमाला प्रेषिता।

---

(३) प्राणा इति। रे प्राणाः! यूयं कामं यथेष्टम् अदक्षिणम् अकरुणं मां परित्यजत, मां परित्यज्य गच्छत, रे प्राणाः! यूयं दक्षिणा अनुकूला भवत, मद्वचनं कुरुध्वं पालयध्वं [यदि शीघ्रं त्वरितं न यात तत् तर्हि नूनं मुषिता वञ्चिताः स्थ, यतः गजगामिनी गजेन्द्रगतिः सा प्रिया मे सागरिका अधुना सुदूरं याता, अतः सा दुर्लभेति। वसन्ततिलकाम् वृत्तम्।

राजा। [ गृहीत्वा, रत्नमालां निर्वर्ण्य, हृदये निधाय। ] अहह!।

कण्ठाश्लेषं समासाद्य तस्याः प्रभ्रष्टयानया।
तुल्यावस्था सखीवेयं तनुराश्वास्यते मम॥ ( ४ )

वयस्य! त्वं परिधत्स्व एनां, येन वयम् एनामपि तावद् दृष्ट्वा धृतिं करिष्यामः।

विदू। जं भवं आणवेदि। (१) [इति कण्ठे परिदधाति।]

राजा। [ सास्रं निश्वस्य। ] वयस्य! दुर्लभं पुनर्दर्शनं प्रियायाः।

विदू। [ दिशोऽवलोक्य सभयम्। ] भो! मा एव्वं उच्चं मन्तेहि, कदावि कोवि देवीए एत्थ सञ्चरदि ( २ )।

ततः प्रविशति वेत्रहस्ता वसुन्धरा।

वसु। [ उपसृत्य। ] जेदु जेदु भट्टा। एसो क्खु रुमस्सदो भाइणेओ विजअवम्मा किंवि णिवेदिदुकामो दुआरे चिट्ठदि ( ३ )।

राजा। वसुन्धरे! अविलम्बितं प्रवेशय।

वसु। जं देओ आणवेदि। [ निष्क्रम्य, विजयवर्म्मणा

(१) यत् भवान् आज्ञापयति।

(२) भो! मा एवं उच्चैः मन्त्रय, कदापि कोऽपि देव्या अत्र सञ्चरति।

(३) जयति जयति भर्त्ता, एष खलु रुमण्वतो भागिनेयो विजयवर्म्मा किमपि निवेदयितुकामो द्वारि तिष्ठति।

(४) कण्ठेति। तस्याः कण्ठाश्लेषमालिङ्गनं समासाद्य प्रभ्रष्टया च्युतया-ऽनया रत्नमालया तुल्या समाना अवस्था यस्याः सा सखीवेयं मम तनु राश्वास्यते आश्वस्ता क्रियते। अनुष्टुब् वृत्तम्।

सह पुनः प्रविश्य च।] विजयवर्म्मन्! एसो क्खु भट्टा, ता उपसप्पदु अज्जो णं (१)।

विजयवर्म्मा। [उपसृत्य।] जयति जयति देवः। देव! दिष्ट्या वर्द्धसे रुमण्वतो विजयेन।

राजा। [सपरितोषम्।] विजयवर्म्मन्! अपि जिताः कोशलाः?।

विजय। देवस्य प्रसादात्।

राजा। साधु रुमण्वन्! साधु, अचिरात् महत्प्रयोजनम् अनुष्ठितम्। विजयवर्म्मन्! तत् कथय कथामतिविस्तरतः श्रोतुमिच्छामि।

विजय। देव! श्रूयताम्। वयमितो देवादेशात् कतिपयैरेवाहोभिरनेककरितुरगपत्तिदुर्निवारेण महता बलसमूहेन गताः। रुमण्वान् विन्ध्यदुर्गावस्थितस्य कोशलनृपतेः द्वारमवष्टभ्य सेनाः समावेशयितुम् आरब्धवान्।

राजा। ततस्ततः?

विजय। ततः कोशलेश्वरोऽपि अतिदर्पात् रुमण्वत्परिभवम् असहमानो हास्तिकप्रायमशेषम् आत्मसैन्यं सज्जीकृतवान्।

विदू। भो! लहुं लहुं आचक्ख, वेवदि मे हिअअं। (२)

राजा। ततस्ततः?

विजय। देव! कृतनिश्चयश्चासौ।

---

(१) यत् देव आज्ञापयति। विजयवर्म्मन्! एष खलु भर्त्ता, तदुपसर्पतु आर्य्यः एनम्।

(२) भो! लघु लघु आचक्ष्व, वेपते मे हृदयम्।

योद्धुं निर्गत्य विन्ध्यादभवदभिमुखस्तत्क्षणं दिग्विभागान्
विन्ध्येनेवापरेण द्विपपतिपृतनापीडबन्धेन रुन्धन् ।
वेगाद्बाणान् विमुञ्चन्नथ समदगजोत्पिष्टपत्तिर्निपत्य
प्रत्यायाद्वाञ्छितासिद्विगुणिततरभसस्तं रुमण्वान् क्षणेन ॥ (५)

अपिच ।

अस्त्रव्यस्तशिरस्त्रशस्त्रकषणैः कृत्तोत्तमाङ्गे क्षणम्
व्यूढासृक्सरिति स्वनत्प्रहरणे वर्मोद्वमद्वह्निनि ।
आहूयाजिमुखे स कोशलपतिर्भग्ने प्रधाने बले—

राजा । कथमस्मदीयान्यपि बलानि भग्नानि ?

विजय । एकेनैव रुमण्वता शरशतैर्मत्तद्विपस्थो हतः ॥ (६)

विदू । जेदु जेदु भवं, जिदं अह्मेहिं । (१) [इति नृत्यति ।]

(१) जयति जयति भवान्, जितमस्माभिः ।

(५) योद्धुमिति । रुमण्वान् सेनापतिः योद्धुं युद्धं कर्त्तुं विन्ध्यात् पर्वतात् निर्गत्य अभिमुखोऽभवत् । तत्क्षणं अपरेण विन्ध्येनेव द्विपपतिपृतनापीडबन्धेन गजसेनासमूहघटनया दिग्विभागान् दिगन्तान् रुन्धन् व्याप्नुवन्, अथ, वेगात् बलात् बाणान् शरान् विमुञ्चन् त्यजन्, समदैः मत्तैः गजैः उत्पिष्टा विनाशिताः पत्तयो येन स तादृशः सन् निपत्य अग्रगामी भूत्वा वाञ्छितस्य अभिलषितस्य वस्तुनः असिद्ध्या अप्राप्त्या द्विगुणितो रभसो वेगो यस्य तादृशः सन् क्षणेन तं कोशलेशं प्रत्यायात् प्राप्तवान् । स्रग्धरा वृत्तम् ।

(६) अस्त्रेति । अस्त्रैः व्यस्तानि विक्षिप्तानि यानि शिरस्त्रशस्त्राणि तैः कषणैः आघातैः कृत्तानि छिन्नानि उत्तमाङ्गानि यस्मिन् तस्मिन् क्षणं व्यूढासृक्सरिति प्रबलवेगेन प्रवहमानरक्तनदीके स्वनत्प्रहरणे शब्दायमानायुधे वर्मभ्य उद्वमन् उद्गच्छन् वह्निः यस्मिन् तस्मिन् आजिमुखे संग्रामारम्भे आहूय स कोशलपतिः प्रधाने बले सैन्ये भग्ने विनष्टे सति एकेनैव न तु सहायबलेनेत्यर्थः रुमण्वता शरशतैः बाणैः मत्तद्विपस्थोऽसौ हतः विनाशितः । शार्दूलविक्रीडितम् वृत्तम् ।

राजा। साधु कोशलपते! साधु, मृत्युरपि ते श्लाघ्यते यस्य हि रिपवोऽपि पुरुषकारमेवं वर्णयन्ति। ततस्ततः, ?

विजय। देव! ततो रुमण्वानपि कोशलेषु मद्भ्रातरं ज्यायांसं जयवर्माणं स्थापयित्वा, प्रहारव्रणितशास्त्रिकप्रायम् अशेषसैन्यम् अनुवर्त्तमानः शनैः शनैः आगच्छत्येव।

राजा। वसुन्धरे! उच्यतां यौगन्धरायणः प्रदर्श्यतां मत्-प्रसादस्य विभव इति।

वसु। जं देवो आणवेदि। (१) [ विजयवर्म्मणा सह निष्क्रान्ता। ]

ततः प्रविशति काञ्चनमाला।

काञ्च। आणत्तम्हि देवीए, जह—"गच्छ, हञ्जे कञ्चण-माले! एदं ऐन्दजालिअं अज्जउत्तस्स दंसेहि"। [ इति परि-क्रम्यावलोक्य च ] एसो क्खु भट्टा, ता जाव णं उपसप्पामि। [ उपसृत्य। ] जेदु जेदु भट्टा। भट्टा! देवी विण्णवेदि, एसो क्खु उज्जइणीदो सम्बरसिद्धि णाम ऐन्दजालिओ आअदो, ता पेक्खदु भट्टा (२)।

राजा। अस्ति नः कौतुकम् ऐन्द्रजालिके, ततः शीघ्रं प्रवेशय।

काञ्च। जं भट्टा आणवेदि। [ निष्क्रम्य पिच्छिकाहस्तेन ऐन्द्रजालिकेन सह प्रविश्य। ] एदु एदु अज्जो।

---

(१) यत् देव आज्ञापयति।

(२) आज्ञप्तास्मि देव्या, यथा—"गच्छ, हञ्जे काञ्चनमाले! इमम् ऐन्द्रजालिकम् आर्य्यपुत्रस्य ( आर्य्यपुत्राय ) दर्शय"। एष खलु भर्त्ता, तद्यावदेनमुपसर्पामि। जयति जयति भर्त्ता, भर्त्तः! देवी विज्ञापयति, एष खलु उज्जयिनीतः, सम्बरसिद्धिर्नाम ऐन्द्रजालिकः आगतः, तत् पश्यतु भर्त्ता।

ऐन्द्रजालिकः। [ परिक्रामति। ]

काञ्च। एसो भट्टा, ता उवसप्पदु अज्जो (१)।

ऐन्द्र। [ उपसृत्य। ] जेदु जेदु भट्टा। [ पिच्छिकां (क) भ्रामयित्वा बहुधा हास्यं कृत्वा। ]

पणमह चलणे इन्दस्स ऐन्दजालिअत्ति लद्धणामस्स।

तह ज्जेव्व अज्ज सम्बरस्स माआसुपरिट्ठिदजसस्स॥ (७)

देव! किम्

धरणीए मिअङ्को, आआसे महिहरो, जले जलणो।

मज्झह्णम्मि पओसो, दाव सिज्झउ, देहि आणत्तिं॥८॥(२)

विदू। भो वअस्स! अवहिदो होहि, भो! ईदिसो से अवट्ठम्भो जेण सव्वं सम्भावीअदि (३)।

ऐन्द्र। देव! अहवा,

किं जम्पिदेण बहुणा, जं जं हिअएण इच्छसि संदट्ठुं।

तं तं दंसेमि अहं, गुरुणो मन्तप्पहावेण॥ ९॥ (४)

(१) एष भर्ता, तदुपसर्पतु आर्यः।

(२) प्रणमत चरणे इन्द्रस्य ऐन्द्रजालिकेति लब्धनाम्नः।

तथैव अद्य सम्बरस्य मायासुप्रतिष्ठितयशसः॥

देव! किम्।

धरण्यां मृगाङ्कः, आकाशे महीधरो जले ज्वलनः।

मध्याह्ने प्रदोषस्तावत् सिध्यतु देहि आज्ञप्तिम्॥

(३) भो वयस्य! अवहितो भव, भोः ईदृशोऽस्य अवष्टम्भो येन सर्वं सम्भाव्यते।

(४) अथवा

किं जल्पितेन बहुना, यद्यत् हृदयेन इच्छसि संद्रष्टुम्।

तत् तत् दर्शयामि अहं, गुरोर्मन्त्रप्रभावेण॥ आर्या वृत्तम्।

(क) सम्बद्धमयूरपुच्छगुच्छकम्।

राजा। भद्र ! तिष्ठ तावत्। काञ्चनमाले ! उच्यतां देवी, युष्मदीय एव अयम् ऐन्द्रजालिकः, विजनीकृतश्च अयम् उद्देशः, तदागच्छ, सहितौ एव एनं पश्यावः।

काञ्च। जं भट्टा आणवेदि। [ निष्क्रम्य वासवदत्तया सह प्रविशति। ]

वास। कञ्चणमाले ! उज्जइणीदो आअदोत्ति अत्थि मे तस्सिं ऐन्द्जालिए पक्खपादो (१)।

काञ्च। णादिउलबहुमाणो क्खु एसो देवीए, ता एदु एदु भट्टिणी। [ इति परिक्रामतः। ] भट्टिणि ! एसो भट्टा, ता उपसप्पदु देवी (२)।

वास। [ उपसृत्य। ] जेदु जेदु अज्जउत्तो। (३)

राजा। देवि ! बहुतरम् अनेन गर्जितम्, तदिहस्थौ एव एनं पश्यावः।

वास। [ उपविशति। ]

राजा। भद्र ! प्रस्तूयतां बहुविधम् इन्द्रजालम्।

ऐन्द्र। जं देवो आणवेदि। [ बहुविधं नाट्यं कृत्वा पिच्छिकां भ्रामयन्। ]

हरिहरबह्मप्पमुहं देवं दंसेमि देवराअं अ।
गअणह्मि सिद्धचारणसुरबहूसत्थञ्च णच्चन्तं ॥१०॥ (४)

---

(१) काञ्चनमाले ! उज्जयिनीत आगत इति अस्ति मे तस्मिन् ऐन्द्रजालिके पक्षपातः।

(२) ज्ञातिकुलबहुमानः खलु एषः देव्याः, तत् एतु एतु भर्त्री। भर्त्रि ! एष भर्त्ता, तदुपसर्पतु देवी।

(३) जयति जयति आर्य्यपुत्रः।

(४) हरिहरब्रह्मप्रमुखान् देवान् दर्शयामि, देवराजञ्च।
गगने सिद्धचारणसुरवधूसार्थञ्च नृत्यन्तम् ॥ आर्य्या वृत्तम्।

सर्वे। [ सविस्मयम् पश्यन्ति। ]

राजा। [ उत्थाय दृष्ट्वा आसनादवतरन्। ] आश्चर्यम् आश्चर्यम्।

विदू। अच्चरीअं अच्चरीअं।

वास। अच्चरीअं अच्चरीअं।

राजा। देवि! पश्य,

एष ब्रह्मा सरोजे रजनिकरकलाशेखरः शङ्करोऽयम्
दोर्भिर्दैत्यान्तकोऽसौ सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः।
एषोऽप्यैरावतस्थस्त्रिदशपतिरमी देवि! देवास्तथान्ये
नृत्यन्ति व्योम्नि चैताश्चलचरणरणन्नूपुरा दिव्यनार्यः॥ (११)

वास। अच्चरीअं अच्चरीअं।

विदू। [ अपवार्य्य। ] हा दासीए पुत्त ऐन्दआलिअ! किं एदेहिं देवेहिं अच्छराहिं अ दंसिदाहिं, जइ दे इमिणा परितुट्ठेण कज्जं, ता दंसेहि साअरिअं (१)।

ततः पुनः प्रविशति वसुन्धरा।

वसु। [ राजानमुपसृत्य। ] जेदु जेदु भट्टा, अमच्चजोअन्ध-

---

(१) हा दास्याः पुत्र ऐन्द्रजालिक! किमेतैः देवैः अप्सरोभिश्च दर्शिताभिः, यदि ते अमुना परितुष्टेन कार्य्यं, तत् दर्शय सागरिकाम्।

---

(११) एष इति। सरोजे पद्मासने एष ब्रह्मा, रजनिकरस्य चन्द्रस्य कला एकात्मिका शेखरे यस्य सोऽयं शङ्करः, धनुषा सह वर्त्तमानानि असि-गदा-चक्राख्यैव चिह्नानि येषां तैः चतुर्भिः दोर्भिः हस्तैः उपलक्षितोऽसौ दैत्यान्तको विष्णुः, ऐरावतस्थः एषोऽपि त्रिदशानां देवानां पतिः इन्द्रः। हे देवि! तथा अन्ये अपरे अमी बहवः देवाः, किञ्च चलेषु चरणेषु रणन्ति नूपुराणि यासां ता एता दिव्यनार्य्योऽप्सरसश्च व्योम्नि नृत्यन्ति। स्रग्धरा वृत्तम्।

राअणो विण्णवेदि, एसो क्खु विक्कमबाहुणा कञ्चुइणा सह अणुप्पेसिदो वसुभूदी, ता अरिहदि देवी इमस्सिं एव्व सुन्दर-मुहुत्तए पेक्खिदुं, अहंवि कज्जसेसं समापिअ आअदो ज्जेव्व(१)

( इति निष्क्रान्ता )।

वास। अज्जउत्त! चिट्ठदु दाव पेक्खणअं, मादुलकुलादो अज्ज अमच्चप्पधाणो अमच्चवसुभूदी आअदो, ता एदं दाव पेक्खदु अज्जउत्तो ( २ )।

राजा। यथाह देवी। [ ऐन्द्रजालिकं प्रति। ] भद्र! विश्राम्यताम् इदानीम्।

ऐन्द्र। [ पुनः पिच्छिकां भ्रामयति। ] जं देवो आण-वेदि। [ निष्क्रामन्। ] एक्कं मे उण खेड़नअं अवस्सं देवेन पेक्खिदव्वं ( ३ )।

राजा। भद्र! द्रक्ष्यामः।

वास। कञ्चणमाले! गच्छ तुमं, देहि से पारितोसिअं(४)।

काञ्च। जं देवी आणवेदि। [ ऐन्द्रजालिकेन सह निष्क्रान्ता। ]

राजा। वसन्तक! प्रत्युद्गम्य, प्रवेश्यतां वसुभूतिः।

विदू। जं भट्टा आणवेदि। [ निष्क्रान्तः। ]

---

(१) जयति जयति भर्त्ता, अमात्ययौगन्धरायणो विज्ञापयति, एष खलु विक्रमबाहुना: कञ्चुकिना सह अनुप्रेषितो वसुभूतिः, तदर्हति देवोऽस्मिन्नेव सुन्दर-मुहूर्त्ते प्रेक्षितुम्, अहमपि कार्य्यशेषं समाप्यागत एव।

(२) आर्य्यपुत्र! तिष्ठतु तावत् प्रेक्षणकम्, मातुलकुलात् (मातुलगृहात्) अद्य अमात्यप्रधानः अमात्यवसुभूतिरागतस्तदिमं तावत् प्रेक्षताम् आर्य्यपुत्रः।

(३) यत् देव आज्ञापयति। एकं मे पुनः खेलनकं अवश्यं देवेन प्रेक्षितव्यम्।

(४) काञ्चनमाले! गच्छ त्वं, देहि अस्मै पारितोषिकम्।

ततः प्रविशति वसन्तकेन सह कञ्चुकी वसुभूतिः बाभ्रव्यश्च ।

विदू । एदु एदु श्रमच्चो ।

वसु । [ समन्तादवलोक्य । ] अहो वत्सेश्वरस्य अनुभाव: । इह हि,—

आक्षिप्तो जयकुञ्जरेण तुरगान् निर्वर्णयन् वल्लभान्
सङ्गीतध्वनिनाऽऽहृतः क्षितिभृतां गोष्ठीषु तिष्ठन् क्षणम् ।
सद्यो विस्मृतसिंहलेन्द्रविभवः कक्षाप्रदेशेऽप्यहो
हास्येनेव कुतूहलेन महता ग्राम्यो यथाहं कृतः ॥ (१२)

बाभ्र । वसुभूते ! अद्य खलु चिरात् स्वामिनं द्रक्ष्यामीति यत्सत्यमानन्दातिशयेन किमपि अवस्थान्तरमनुभवामि । कुतः

विवृद्धिं कम्पस्य प्रथयतितरां साध्वसवशात्
अविस्पष्टां दृष्टिं तिरयति पुनर्वाष्पसलिलैः ।
स्खलद्वर्णां वाणीं जडयतितरां गद्गदतया
जराया: साहाय्यं मम हि परितोषोऽद्य कुरुते ॥ (१३)

---

(१२) आक्षिप्त इति । वल्लभान् श्रेष्ठान् तुरगान् निर्वर्णयन् पश्यन् जयकुञ्जरेण आक्षिप्तः क्षितिभृतां राज्ञां गोष्ठीषु क्षणं तिष्ठन् अहं सङ्गीतध्वनिना गानस्वरेण आहृतः, सद्यो विस्मृतः सिंहलेन्द्रस्य विभवः ऐश्वर्यं येन स कक्षाप्रदेशे द्वारदेशे हास्येनेव दौवारिकेणेव महता कुतूहलेन कौतुकेन अहं ग्राम्यः अदृष्टराजविभवो यथा स इव कृतः । शार्दूलविक्रीडितम् वृत्तम् ।

(१३) विवृद्धिमिति । साध्वसवशात् भयवशात् कम्पस्य विवृद्धिं प्रथयतितराम् अतिशयेन प्रथयति, अविस्पष्टां जरसा मलिनीभूतां दृष्टिं पुनर्वाष्पसलिलैः नयनाश्रुभिस्तिरयति आच्छादयति । तथा गद्गदतया स्खलद्वर्णां अविस्पष्टां वाणीं जडयतितरां जडतामतिशयेन करोति हि यतोऽद्य मम परितोषो राजदर्शनजनितः आनन्दः जराया वार्द्धक्यस्य साहाय्यं कुरुते, पूर्वोक्तकार्यचयैः जरा दर्शिता वाक्यपदार्थगतहेतुत्वेन काव्यलिङ्गमलङ्कारः, यदुक्तं दर्पणकृता—"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गम् निगद्यते" इति वचनात् । शिखरिणी वृत्तम् ।

विदू । [ अग्रे भूत्वा । ] एदु एदु अमच्चो ।

वसु । [ विदूषकस्य कण्ठे रत्नमालां दृष्ट्वा, अपवार्य्य । ] वाभ्रव्य ! जाने सा एव इयं रत्नमाला, या देवेन राजपुत्र्यै प्रस्थानसमये दत्ता इति ।

वाभ्र । अमात्य ! अस्ति सादृश्यम्, तत् किं वसन्तका-दवगच्छामि प्रभवमस्याः ?

वसु । वाभ्रव्य ! मा मैवम्, महति राजकुले रत्नबाहुल्यान्न दुर्लभो भूषणानां संवादः । [ इति परिक्रामति । ]

विदू । [ राजानमुद्दिश्य । ] एसो वच्छाहिवो, ता उपसप्पदु अमच्चो (१) ।

वसु । [ उपसृत्य । ] जयति जयति देवः ।

राजा । [ उत्थाय । ] अभिवादये ।

वसु । श्रेयान् भूयाः ।

राजा । आसनमासनमाधेयाय ।

विदू । भो ! एदं आसणं एत्थ उवविसदु अमच्चो (२) । [ इत्युत्तरीयं प्रयच्छति । ]

वसु । [ उपविशति । ]

कञ्चु । देव ! वाभ्रव्यः प्रणमति ।

राजा । [ पृष्ठे हस्तं दत्त्वा । ] वाभ्रव्य ! इत आस्यताम् ।

वाभ्रव्य । [ प्रणम्य उपविशति । ]

विदू । अमच्च ! एसा देवी वासवदत्ता पणमदि (३) ।

---

(१) एष वत्साधिपस्तदुपसर्पतु अमात्यः ।

(२) भो ! इदम् आसनमत्र उपविशतु अमात्यः ।

(३) अमात्य ! एषा देवी वासवदत्ता प्रणमति ।

वास। अज्ज पणमामि (१)।

वसु। आयुष्मति! वत्सराजसदृशं पुत्रमाप्नुहि।

कञ्चुकी। देवि! वाभ्रव्यः प्रणमति।

सर्वे। [उपविशन्ति।]

राजा। आर्य्य वसुभूते! अपि कुशलं तत्र भवतः सिंहलेश्वरस्य?

वसु। [ऊर्द्ध्वम् अवलोक्य निश्वस्य च।] देव! न जाने, किं विज्ञापयामि मन्दभाग्यः। [अधोमुखस्तिष्ठति।]

वास। [सविषादमात्मगतम्।] हद्धी हद्धी, किं दाणिं वसुभूदी कधइस्सदि (२)।

राजा। वसुभूते! कथं पर्य्याकुल इव असि।

वाभ्र। [अपवार्य्य।] चिरमपि स्थित्वा, यत् कथनीयं तदिदानीमेव कथ्यताम्।

वसु। [सास्रम्।] देव! न शक्यं निवेदयितुं, तथाप्येष कथयामि मन्दभाग्यः, यासौ तत्र भवतः सिंहलेश्वरस्य दुहिता रत्नावली नाम आयुष्मती सिद्धादेशेन आदिष्टा, योऽस्याः पाणिग्रहणं करिष्यति, स सार्वभौमो राजा भविष्यति, तत्प्रत्ययात् यौगन्धरायणेन वहुशः प्रार्थ्यमाना, सिंहलेश्वरेण वासवदत्तायाः चित्तखेदं परिहरता, न दत्ता।

राजा। [अपवार्य्य।] देवि! किमिदमिदानीमलीकं त्वदीयमातुलामात्यः कथयति।

वास। [विमृश्य।] अज्जउत्त! अहंवि ण आणामि, को एत्थ अलिअं मन्तेदि? (३)।

(१) आर्य्य! प्रणमामि।

(२) हा धिक्! हा धिक्! किमिदानीं वसुभूतिः कथयिष्यति।

(३) आर्य्यपुत्र! अहमपि न जानामि, कोऽत्रालीकं मन्त्रयति?

विदू। तदो किं संवुत्तं ? (१)।

वसु। ततो लावणकेन वह्निना देवी दग्धेति वार्त्ताम् उत्पाद्य, देवेन मद्दन्तिकं बाभ्रव्यः प्रहितः, पुनरपि सा प्रार्थिता च, ततः तत्र भवता सिंहलेश्वरेण चिन्तितं, देवेन सह अस्माकं सम्बन्धलोपो मा भूदिति दत्ता सा रत्नावली देवाय प्रतिपादयितुम् आनीयमाना समुद्रे यानभङ्गान्निमग्नेति। [ रुदन् अधोमुखस्तिष्ठति।

वास। [ सास्रम्। ] हा हदाम्हि मन्दभाइणी, हा बहिणि रअणावलि ! कहिं दाणिं सि, देहि मे पडिवअणं (२)।

राजा। समाश्वसिहि समाश्वसिहि, दुरवगाहा गतिर्दैवस्य, वाहनभङ्गपतितोत्थितौ ननु एतावेव ते निदर्शनम्। [ इति वसुभूतिबाभ्रव्यौ दर्शयति। ]

वास। अज्जउत्त ! जुज्जदि एव्वं, परं कुदो मम एत्तिअं भाअहेअं ? (३)।

राजा। [ अपवार्य्य। ] बाभ्रव्य ! किमेवमिति सर्वथा न अवगच्छामि।

बाभ्र। देव ! श्रूयताम्। [ नेपथ्ये महान् कलकलः। ]

हर्म्याणां हेमशृङ्गश्रियमिव निचयैरर्चिषामादधानः

सान्द्रोद्यानद्रुमाग्रग्लपनपिशुनितात्यन्ततीव्रप्रतापः।

---

(१) ततः किं संवृत्तम् ?

(२) हा हतास्मि, मन्दभागिनी ! हा भगिनि रत्नावलि ! क्व इदानीमसि, देहि मे प्रतिवचनम्।

(३) आर्य्यपुत्र ! युज्यते एवं, परं कुतो मे एतावत् भागधेयम्।

कुर्वन् क्रीड़ामहीध्रं सजलजलधरश्यामलं धूमपातैः
एष प्लोषार्त्तयोषिज्जन इह सहसैवोत्थितोऽन्तःपुरेऽग्निः ॥ (१४)

अपि च । देवीदाहप्रवादोऽयं योऽभूल्लावणके पुरा ।
करिष्यन्निव तं सत्यमयमग्निः समुत्थितः ॥ (१५)

सर्वे । ससम्भ्रमं पश्यन्ति ।

राजा । कथं देवी वासवदत्ता दग्धा ? हा प्रिये वासवदत्ते !

वास । अज्जउत्त ! परित्ताआहि परित्ताआहि ।

राजा । अये ! कथमतिसम्भ्रमात् पार्श्वस्थापि देवी नोपलक्षिता [ देव्याः पाणिं गृहीत्वा आलिङ्ग्य । ] देवि ! समाश्वसिहि समाश्वसिहि ।

वास । अज्जउत्त ! मए अत्तणो किदे ण भणिदं, किं उण एसा क्खु मए णिग्घिणाए इधो णिअड़ेण संजमिदा साअरिआ विवज्जीअदि, ता परित्ताअदु अज्जउत्तो (१) ।

राजा । कथं देवि ! सागरिका विपद्यते ? एष गच्छामि ।

---

(१) आर्य्यपुत्र ! मया आत्मनः कृते न भणितम्, किं पुनरेषा खलु मया निर्घृणया इह निगड़ेन संयमिता सागरिका विपद्यते, तत् परित्रायताम् आर्य्यपुत्रः ।

---

(१४) हर्म्म्याणामिति । अर्चिषां वह्निशिखानाम्, स्फुलिङ्गानामिति भावः, निचयैः समूहैः हर्म्म्याणां प्रासादानां हेमशृङ्गश्रियं सुवर्णशेखरशोभामिव आदधानः विरचयन् सान्द्रा निविड़संस्थिता ये उद्यानद्रुमाः तेषां ग्लपनेन शोषणेन पिशुनितः पिशुनीकृतः अत्यन्ततीव्रप्रतापः उष्मप्रखरता येन सः, तथा धूमपातैः ऊर्द्धोत्थधूमराशिभिः सजलजलधरश्यामलं नवीननीरदमेचकं क्रीड़ामहीध्रं क्रीड़ाचलं कुर्व्वन्निव, तथा प्लोषेण दाहेन आर्त्ताः पीड़िताः योषिज्जना येन स एष परिलक्ष्यमाणोऽग्निः सहसा अकस्मात् एव अन्तःपुरे उत्थितः, अग्निः प्रज्वलित इत्यर्थः । स्रग्धरा वृत्तम् ।

(१५) देवीति । लावणके पुरा आदौ यो देवीदाहप्रवादो वासवदत्तादाहवार्त्ता अभूत्, वासवदत्ता दग्धा जाता इति जनरवः आसीत्, तं प्रवादं सत्यं करिष्यन्निव इति हेतोः अयमग्निः समुत्थितः । अतीतप्रेक्षालङ्कारः । अनुष्टुब्वृत्तम् ।

वसु। देव! किमिदमकारणमेव पतङ्गवृत्तिः क्रियते?

वाभ्र। देव! युक्तमाह वसुभूतिः।

विदू। [राजानमुत्तरीये गृहीत्वा।] भो! मा क्खु साहसं करेहि (१)।

राजा। [उत्तरीयमाकर्षन्।] अरे धिङ् मूर्ख! सागरिका विपद्यते, किमद्यापि प्राणाः परिरक्ष्यन्ते?

वाभ्र। किमिदम् अवस्तुनि भरतकुलं संशयतुलायाम् आरोप्यते। अथवा किं प्रलापैः, भक्तिसदृशं करोमि।

राजा। [धूमाभिभवं नाटयति।]

विरम विरम वह्ने! मुञ्च धूमानुबन्धम्
प्रकटयसि किमुच्चैरर्चिषां चक्रवालम्।
विरहहुतभुजाहं यो न दग्धः प्रियायाः
प्रलयदहनभासा तस्य किं त्वं करोषि॥ (१६)

कथम् आसन्नहुतवहा वर्त्तते सागरिका, तत् त्वरितम् एनां सम्भावयामि।

वास। कधं मे दुक्खभाइणीए वअणादो एव्वं व्ववसिदं अज्जउत्तेण, ता अहंवि अज्जउत्तं ज्जेव्व अणुगमिस्सं (२)

---

(१) भो! मा खलु साहसं कुरु।

(२) कथं मम दुःखभागिन्या वचनेन एवं व्यवसितं आर्य्यपुत्रेण, तदहमपि आर्य्यपुत्रमेव अनुगमिष्यामि।

---

(१६) विरमेति। हे वह्ने! अनल! विरम विरम निवृत्तो भव, विरमेत्यत्र सम्भ्रमे द्विर्भावः। धूमानुबन्धं धूमोद्गमं मुञ्च, किं किमर्थं अर्चिषां शिखानां चक्रवालं समूहं उच्चैः प्रकटयसि, अनेन विधिना न मम काचिदपि हानिः भविष्यति इत्यर्थः। प्रियाया विरहहुतभुजा वियोगानलेन योऽहं न दग्धः तेनैव

विदू। [परिक्रामन् अग्रतो भूत्वा।] भोदि! अहंवि पथोवदेसको होमि (१)।

वसु। कथं प्रविष्ट एव ज्वलनं वत्सराजः तन्ममापि दृष्ट-राजपुत्रीविपत्तेर्युक्तमिहैव आत्मानमाहुतीकर्त्तुम्।

कञ्चु। [सास्रम्।] हा महाराज! हा महाराज! किमिदम् अकारणमेव भरतकुलं संशयतुलायाम् आरोपितं, अथवा किं प्रलापेन अहमपि भक्तिसदृशम् आचरामि। [इति सर्वे अग्निप्रवेशं नाटयन्ति।]

ततः प्रविशति निगड़संयमिता सागरिका।

साग। हद्धी! हद्धी! आः समन्तदो पज्जलिदो हुदवहो! अज्ज हुदवहो दिट्ठिआ करिस्सदि मे दुक्खावसाणं (२)।

राजा। अये! इयम् आसन्नहुतवहा सागरिका वर्त्तते। तत् त्वरितमेनां सम्भावयामि। [त्वरितमुपसृत्य।] अयि प्रिये! किम् अद्यापि मध्यस्थतया वर्त्तसे।

साग। [राजानं दृष्ट्वा आत्मगतम्।] कधं अज्जउत्तो! ता एदं पेक्खिअ पुणोवि मे जोविदासा संवुत्ता। [प्रकाशम्।] भट्टा! परित्ताआहि परित्ताआहि (३)।

---

(१) भवति! अहमपि पथोपदेशको भवामि।

(२) हा धिक्! हा धिक्! आः! समन्तात् प्रज्वलितो हुतवहः। अद्य हुतवहो दिष्ट्या करिष्यति मे दुःखावसानम्।

(३) कथम् आर्य्यपुत्रः? तदेनं प्रेक्ष्य पुनरपि मे जीविताशा संवृत्ता। भर्त्तः! परित्रायस्व परित्रायस्व।

---

दाह उचित इत्यर्थः। तस्य अदग्धस्य मम प्रलयदहनभासा प्रलयवह्निस्फुरणेन त्वं किं करिष्यसि न किञ्चिदपि कर्त्तुं शक्ष्यसि इत्यर्थः। मालिनी वृत्तम्।

राजा । भीरु ! अलं भयेन,—

मुहूर्त्तमपि सञ्जतो बहुल एष धूमोद्गमः ।

[ अग्रतोऽवलोक्य । ]

हहा धिगिदमंशुकं ज्वलति ते स्तनात् प्रच्युतम् ।

[ विलोक्य । ]

मुहुः स्खलसि किम्—

[ निपुणमवलोक्य । ]

—कथं निगड़संयतासि, द्रुतम्

नयामि भवतीमितः प्रियतमेऽवलम्बस्व माम् ॥ (१७)

[ कण्ठे गृहीत्वा निमीलिताक्षः स्पर्शसुखं नाटयन् । ] अहो ! अपगतोऽयं मे सन्तापः । प्रिये ! समाश्वसिहि समाश्वसिहि ।

व्यक्तं लग्नोऽपि भवतीं न धक्ष्यति हुताशनः ।

यतः सन्तापमेवायं स्पर्शस्ते हरति प्रिये ! ॥ (१८)

[ अक्षिणी समुन्मील्य निरीक्ष्य च । ] अहो महदाश्चर्य्यम् ।

---

(१७) मुहूर्त्तमिति । बहुलः महान् एव धूमोद्गमः मुहूर्त्तं अल्पकालमपि सञ्जातः, हहा खेदे, धिक् वह्निमित्यर्थः, ते तव स्तनात् प्रच्युतं स्खलितं इदम् अंशुकं ज्वलति, किं कथं मुहुः स्खलसि, कथं निगड़ेन बन्धनस्तम्भेन संयता बद्धासि, द्रुतं शीघ्रमितः प्रदेशात् भवतीं नयामि । हे प्रियतमे ! मामवलम्बस्व, अन्यथा स्थानान्तरनयनं दुर्घटमेव इत्यर्थः । पृथ्वी वृत्तम् ।

(१८) व्यक्तमिति । व्यक्तं स्फुटं यथा भवति तथा लग्नोऽपि त्वामाश्रितोऽपि हुताशनो दहनः भवतीं न धक्ष्यति न दग्धां करिष्यति, यतः हे प्रिये ! ते तव अयं स्पर्शः सन्तापं हरति, अतः वह्निस्पर्शाद्यायास्तव स्पर्शस्यापि उष्णत्वसम्भावनया तादृशाकथनात् अतिशयोक्तिरलङ्कारः । अनुष्टुब्वृत्तम् ।

क्वासौ गतो हुतवहस्तदवस्थमेतत्

अन्तःपुरं——

[ वासवदत्तां दृष्ट्वा। ]

——कथमवन्तिनृपात्मजेयम्।

वास। [ राज्ञः शरीरं परामृशन्ती सहर्षम्। ] दिट्ठिआ अक्खदसरीरो अज्जउत्तो (१)।

राजा। वाभ्रव्य एषः—

वाभ्र। विजयतां महाराजः। देव! दिष्ट्या वर्द्धसे, पुनरुच्छ्वसिताः स्मः।

[ राजा। ]

—वसुभूतिरयम्—

वसु। देव दिष्ट्या वर्द्धसे।

[ राजा। ]

—वयस्य!

विदू। जेदु जेदु भवं।

राजा। [ विचिन्त्य सवितर्कम्। ]

स्वप्ने मतिर्भ्रमति किं न्विदमिन्द्रजालम्॥ (१८)

विदू। भो मा सन्देहं करेहि, इन्दजालं क्खु एदं।

(१) दिष्ट्या अक्षतशरीरः आर्य्यपुत्रः।

(१८) क्वेति। असौ हुतवहोऽनलः क्व कुत्र गतः? एतदन्तःपुरं तदवस्थं प्रकृतावस्थमिव भासते इत्यर्थः। कथं इयं अवन्तिनृपात्मजा वासवदत्ता, एष वाभ्रव्यः, अयं वसुभूतिः, हे वयस्य! स्वप्ने मम मतिः भ्रमति किम्? विपर्य्यस्ता किम्? नु भो! इदम् इन्द्रजालं तयोः अन्यतरमेव इत्यर्थः। वसन्ततिलकं वृत्तम्।

भणिदं तेण दासीए पुत्तेण ऐन्द्रजालिएण, जह अवस्सं एव्व देवेण एक्कं मे खेड्डणअं दट्ठव्वं त्ति, ता तं ज्जेव्व एदं (१)।

राजा। देवि! इयमस्माभिः इह आनीता त्वद्वचनात् सागरिका।

वास। [विहस्य।] अज्जउत्त! जाणिदं दे सव्वं (२)।

वसु। [सागरिकां दृष्ट्वा अपवार्य्य] बाभ्रव्य! सदृशी इयं राजपुत्र्याः।

बाभ्र। अमात्य! ममापि एतदेव मनसि वर्त्तते।

वसु। [प्रकाशं राजानमुद्दिश्य।] देव! कुत इयं कन्यका?

राजा। देवी जानाति।

वसु। देवि! कुतः पुनरियं कन्यका?

वास। अमच्च! एसा क्खु, साअरादो पाविदेत्ति भणिअ, अमच्चजोअन्धराअणेण मम हत्थे णिक्खित्ता, अदो एव्व साअरिएत्ति सद्दावीअदि (३)।

राजा। [स्वगतम्।] कथं यौगन्धरायणेन न्यस्ता? कथमसौ मे अनिवेद्य किञ्चित् करिष्यति।

---

(१) भो! मा सन्देहं कुरु, इन्द्रजालं खलु इदम्। भणितं तेन दास्याः पुत्रेण ऐन्द्रजालिकेन, यथा अवश्यमेव देवेन एकं मे खेलनकं द्रष्टव्यमिति, तमदेवैतत्।

(२) आर्य्यपुत्र! ज्ञातं ते सर्वम्।

(३) अमात्य! एषा खलु सागरतः प्राप्ता इति भणित्वा, अमात्ययौगन्धरायणेन मम हस्ते निक्षिप्ता, अत एव सागरिकेति शब्द्यते।

वसु। [अपवार्य।] बाभ्रव्य! यथा सुसदृशी वसन्तकस्य कण्ठे रत्नमाला, अस्या अपि सागरात् प्राप्तिः तथा व्यक्तं सिंहलेश्वरस्य दुहिता रत्नावली इयम्। [उपसृत्य प्रकाशम्।] आयुष्मति रत्नावलि! त्वमीदृशीमवस्थां गतासि।

साग। [दृष्ट्वा सास्रम्।] कधममच्चो वसुभूदी? (१)।

वसु। हा हतोऽस्मि मन्दभाग्यः। [इति भूमौ पतति।]

साग। हा हदास्मि मन्दभाइणी! हा ताद! हा अज्ज! कहिं सि, देहि मे पड़िवअणं (२) [इति आत्मानं घातयन्ती मोहमुपगता।]

वास। [ससम्भ्रमम्।] कञ्चुइ! इयं सा मम बहिणी रअणावली? (३)।

कञ्चु। देवि! इयमेव सा।

वास। [रत्नावलीमालिङ्ग्य।] बहिणि! समस्सस समस्सस (४)।

राजा। कथमुदात्तवंशप्रभवस्य सिंहलेश्वरस्य विक्रमबाहोः आत्मजा इयम्।

विदू। [स्वगतं, रत्नमालां दृष्ट्वा] पढ़मं एव्व जाणिदं मए, णहि सामाण्णजणस्स ईदिसो परिच्छदो होदित्ति (५)।

---

(१) कथममात्यो वसुभूतिः?

(२) हा हतास्मि! मन्दभागिनी। हा तात! हा आर्य्य! कुत्रासि? देहि मे प्रतिवचनम्।

(३) कञ्चुकिन्! इयं सा मम भगिनी रत्नावली?

(४) भगिनि! समाश्वसिहि समाश्वसिहि।

(५) प्रथममेव ज्ञातं मया, नहि सामान्यजनस्य ईदृशः परिच्छदो भवति इति।

वसु। [ उत्थाय। ] राजपुत्रि! समाश्वसिहि, समाश्वसिहि। ननु इयं ज्यायसी ते भगिनी दुःखमास्ते, तत् परिष्वजस्व (क) एनाम्।

रत्नावली। [ समाश्वस्य, राजानं तिर्य्यगवलोक्य, स्वगतम्। ] किदावराधा क्खु अहं देवीए ण सक्कणोमि मुहं दंसिदुं (१)। [ इति अधोमुखी तिष्ठति।

वास। [ सास्रं बाहू प्रसार्य्य। ] एहि अदिणिट्ठुरा अहं, दाणिं पिअबहिणीएहिं, सिणेहं दंसेमि (२)। [ इति कण्ठे गृह्णाति। ]

रत्नावली। [ स्खलितं नाटयति। ]

वास। [अपवार्य्य। ] अज्जउत्त! लज्जेमि अहं इमिणा अत्तणो णिसंसत्तणेण, ता लहुं अवणेहि से एदं बन्धणं (३)।

राजा। [ सपरितोषम्। ] यथाह देवी। [ सागरिकाया बन्धनमपनयति। ]

वास। अज्जउत्त! अमच्चजोअन्धराअणेण एत्तिअं कालं दुज्जणीकिदाह्मि, जेण जाणन्तेणवि ण मे णिवेदिदं (४)।

(१) कृतापराधा खलु अहं देव्या न शक्नोमि मुखं दर्शयितुम्।

(२) एहि अतिनिष्ठुरा अहम् इदानीं प्रियभगिन्याम् स्नेहं दर्शयामि।

(३) आर्य्यपुत्र! लज्जे अहम् अमुना आत्मनो नृशंसत्वेन, तत् लघु अपनय अस्या इदम् बन्धनम्।

(४) आर्य्यपुत्र! अमात्ययौगन्धरायणेन एतावन्तं कालं दुर्जनीकृतास्मि, येन जानतापि न मे निवेदितम्।

(क) आलिङ्ग।

ततः प्रविशति यौगन्धरायणः।

यौग।

देव्या मद्वचनात् तथाभ्युपगतः पत्युर्वियोगो महान्
सा देव्यन्यकलत्रसङ्घटनया दुःखं परं प्रापिता।
तस्याः प्रीतिमयं करिष्यति जगत्स्वामित्वलाभः प्रभोः
सत्यं दर्शयितुं तथापि वदनं शक्नोमि नो लज्जया॥ (२०)

अथवा, किं क्रियते ईदृशम् अत्यन्तमाननीयेषु अपि निरनुरोधवृत्ति स्वामिभक्तिव्रतम्। [ निरूप्य ] अयं देवो महाराजः यावदुपसर्पामि। [ उपसृत्य। ] जयति जयति देवः, देव! क्षम्यतां यन्मया अनिवेद्य कृतम्।

राजा। कथय किम् अनिवेद्य कृतम्।

यौग। करोतु आसनपरिग्रहं देवः, सर्वं विज्ञापयामि।

सर्वे। [ उपविशन्ति। ]

यौग। देव! श्रूयतां, या इयं सिंहलेश्वरस्य दुहिता सा सिद्धेन आदिष्टा, यथा योऽस्याः पाणिग्रहणं करिष्यति, स सार्वभौमो राजा भविष्यति, ततः तत्प्रत्ययात् अस्माभिः स्वामिनोऽर्थे बहुशः प्रार्थ्यमानेनापि सिंहलेश्वरेण देव्या वासवदत्तायाः चित्तखेदं परिहरता यदा न दत्ता।

राजा। तदा किम्?

---

(२०) देव्येति। देव्या वासवदत्तया मद्वचनात् पत्युः स्वामिनो महान् वियोगो विरहस्तथा तेन प्रकारेण अभ्युपगतः सोढ़ः, सा इयं देवी अन्यकलत्रसङ्घटनया परं दुःखं प्रापिता, प्रभोः स्वामिनः अयं जगत्स्वामित्वलाभो जगदेकाधिपत्यप्राप्तिस्तस्या देव्याः प्रीतिं करिष्यति, सत्यं तथापि अहं लज्जया वदनं दर्शयितुं नो शक्नोमि अपकारकत्वादिति भावः। शार्दूलविक्रीडितं वृत्तम्।

यौग। तदा लावणकेन वह्निना देवी दग्धा इति प्रसिद्धिम् उत्पाद्य, तदन्तिकं बाभ्रव्योऽपि प्रहितः।

राजा। यौगन्धरायण! अतःपरं श्रुतं मया, अथ इयं देवीहस्ते किम् अनुचिन्त्य स्थापिता?

विदू। भो! एदस्स अभिप्पाओ मए जाणिदो, अणाचक्खिदंबि एदं जाणीअदि एव्व, जह अन्तेउरगदां एदां जाव अन्तेउरगदो देवो सुहेण दंसइस्सदित्ति (१)

राजा। यौगन्धरायण! गृहीतस्तेऽभिप्रायो वसन्तकेन।

यौग। यदाज्ञापयति देवः।

राजा। ऐन्द्रजालिकवृत्तान्तोऽपि मन्ये त्वत्प्रयोग एव।

यौग। अन्यथा अन्तःपुरे वद्धाया अस्याः कुतो देवेन दर्शनम्? अदृष्टायाश्च वसुभूतिना कुतः परिज्ञानम्?

राजा। [विहस्य।] परिज्ञातायाश्च भगिन्याः सम्प्रति यथा करणीयं, तथा देवी प्रमाणम्।

वास। अज्जउत्त! फुडं एव्व किं ण भणासि, जह पडिवादेहि मए रअणावलिंत्ति (२)।

विदू। भोदि! सुट्ठु तुए जाणिदो पिअवअस्सस्स अभिप्पाओ (३)।

वास। [हस्तौ प्रसार्य्य।] एहि रअणावलि! एहि, दाणिं

---

(१) भो! एतस्य अभिप्रायो मया ज्ञातः। अनाख्यातमपि इदं ज्ञायते एव, यथान्तःपुरगतामेतां यावदन्तःपुरगतो देवः सुखेन द्रक्ष्यतीति।

(२) आर्य्यपुत्र! स्फुटमेव किं न भणसि, यथा प्रतिपादय मह्यं रत्नावलीमिति।

(३) भवति! सुष्ठु त्वया ज्ञातः प्रियवयस्यस्य अभिप्रायः।

किम्पि दे मे बहिणीए अणुरूवं होदु। [इति रत्नावलीं स्वकीयैः आभरणैः अलङ्कृत्य, हस्ते गृहीत्वा, राजानमुपसृत्य।] अज्जउत्त! एदं रअणावलीं पड़िच्छ (१)।

राजा। [सहर्षं हस्तौ प्रसार्य।] को देव्याः प्रसादो न बहु मन्यते। [इति सागरिकां गृह्णाति।]

वास। अज्जउत्त! दूरे क्खु एसाए णादिउलं, ता तह करेदु, जह बन्धुजणं एसा ण सुमरेदि (२)। [इति समर्पयति।]

राजा। यथाज्ञापयति देवी।

विदू। [छोटिकां (क) दत्त्वा सहर्षं नृत्यति।] ही ही भो! जेदु जेदु भवं! पुहवी क्खु दाणिं हत्थगदा पिअवअस्सस्स (३)।

वसु। राजपुत्रि! वासवदत्तां प्रणामेन अर्चय।

रत्नावली। [तथा करोति।]

वाभ्र। देवि! स्थाने देवीशब्दमुद्वहसि।

वास। [रत्नावलीमालिङ्ग्य प्रसादं करोति।]

यौग। इदानीं सफलपरिश्रमोऽस्मि संवृत्तः। देव! किं ते भूयः प्रियम् उपकरोमि।

राजा। किमतःपरमपि प्रियमस्ति? यतः,—

नीतो विक्रमबाहुरात्मसमतां प्राप्त यमुर्वीतले
सारं सागरिका ससागरमहीप्राप्तैकहेतुः प्रिया।

---

(१) एहि रत्नावलि! एहि, इदानीं किमपि ते मे भगिन्या अनुरूपं भवतु। आर्य्यपुत्र! इमां रत्नावलीं प्रतीच्छ।

(२) आर्य्यपुत्र! दूरे खलु एतस्या ज्ञातिकुलं, तत् तथा कुरु यथा बन्धुजनमेषा न स्मरति।

(३) ही ही भो! जयति जयति भवान्! पृथिवी खलु इदानीं हस्तगता प्रियवयस्यस्य।

---

(क) छोटिका तर्ज्जन्यङ्गुष्ठजनितशब्दः, "तुड़ीति भाषा"।

देवी प्रीतिमुपागता च भगिनीलाभात्, जिताः कोशलाः
किं नामास्ति विधेयमत्र भुवने यस्मिन् करोमि स्पृहाम् ॥ (२१)
तथापि इदमस्तु।

## भरतवाक्यम्।

उर्वीमुद्दामशस्यां जनयतु विसृजन् वासवो वृष्टिमिष्टाम्
इष्टैस्त्रैविष्टपानां विदधतु विधिवत् प्रीणनं विप्रमुख्याः।
आकल्पान्तञ्च भूयात् समुपचितसुखः सङ्गमः सज्जनानाम्
निःशेषं यान्तु शान्तिं पिशुनजनगिरो दुर्जया वज्रलेपाः ॥ (२२)

इति निष्क्रान्ताः सर्वे।

इति ऐन्द्रजालिको नाम चतुर्थोऽङ्कः।

इति श्रीहर्षदेवस्य कृतिरियं रत्नावली समाप्ता।

---

(२१) नीत इति। विक्रमबाहुः सिंहलेश्वरः आत्मसमतां नीतः प्रापितः उर्वीतले धरातले सारं सारभूता ससागरायाः मह्याः धरायाः प्राप्तेर्लाभस्य एकहेतुरियं प्रिया सागरिका प्राप्ता, भगिनीलाभात् रत्नावलीलाभात् देवी वासवदत्ता प्रीतिमुपागता च, कोशलाः कोशलदेशवासिनः लक्षणया तद्देशवासिजना लक्ष्यन्ते इति तात्पर्य्यम्, जिता वशीकृताः एतेन स्वाभीष्टसिद्धिः सूचिता, अत्र भुवने किं नाम वस्तु विधेयं कर्त्तव्यं अस्ति यस्मिन् विषये अहं स्पृहां करोमि, तादृशं वस्तु नास्ति अवशिष्टमित्यर्थः। शार्दूलविक्रीडितम् वृत्तम्।

(२२) उर्वीमिति। वासवः इन्द्रः इष्टां अभीष्टां वृष्टिं विसृजन् कुर्वन् उर्वीं पृथ्वीं उद्दामानि अधिकानि शस्यानि यस्यां तां अपरिमितफलशालिनीं जनयतु विदधातु, विप्रमुख्या ब्राह्मणश्रेष्ठाः तैः इष्टैः यज्ञैः विधिवत् त्रिविष्टपानां देवलोकानां प्रीणनं तृप्तिं विदधतु कुर्वन्तु, आकल्पान्तञ्च कल्पपर्यन्तमित्यर्थः समुपचितसुखः

प्रवर्द्धमानसुखः सज्जनानां सङ्गमो भूयात् भवतु, दुर्जया जेतुम् अशक्या अत एव वज्रलेपा इव तद्वदतिकठिनाः पिशुनजनानां दुर्जनानां गिरो वाक्यानि निःशेषं शान्तिं यान्तु प्राप्नुवन्तु । स्रग्धरा वृत्तम् ।

इति पण्डितकुलपतिना बि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता
रत्नावलीव्याख्या समाप्ता ।

---

समाप्तोऽयं ग्रन्थः ।

---

প্রকাশক—শ্রীজীবানন্দ বিদ্যাসাগর বি, এ,
প্রাপ্তিস্থান—২ নং রমানাথ মজুমদারের লেন, কলিকাতা।